संमृशन्नभि स्पृश उपसंस्पृश्य दक्षिणमाग्नीध्रो ऽनूपविश्यत्यथाश्रावयत्यो[1] श्रावयास्तु श्रौषडग्निर्देवो होता देवान्यक्षद्विद्वाꣳश्चिकित्वान्म-नुष्वद्भरतवदमुवदमुवद्ब्रह्मण्वदेह वक्षद्ब्राह्मणा[2] अस्य यज्ञस्य प्राविताꣳर इत्यसौ मानुष इति होतुर्नाम गृह्णात्युपोत्थाय होता विमुञ्चति । विमुक्तो ऽध्वर्युरुपविशति । प्रथममाकाङ्क्ष-माणे । ॥ १५ ॥ त्रयोदशः ॥

अथ यत्र होतुरभिजानाति घृतवतीमध्वर्यो स्रुचमास्यस्वेति तज्जुहूपभृतावादायात्याक्रम्याश्राव्याह समिधो यजेति । वषट्कृते जुहोति यज यजेति । चतुर्थं चतुर्थमौपभृतस्याज्यस्य[3] जुह्वाꣳ समानयते । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावेणानुपूर्वꣳ[4] हवीꣳष्यभिघारयति ध्रुवामेवाग्रे ऽथ दक्षिणं पुरोडाशमथ ध्रुवा-मथोत्तरं पुरोडाशमथ शृतमथ दध्युपभृतमन्ततो । ऽथ चतुर आज्यस्य गृहीत्वाहाग्नये ऽनुब्रूहीत्यत्याक्रम्याश्राव्याहाग्निं यजेति । वषट्कृत उत्तरार्धपूर्वार्धे प्रतिमुखं प्रवाङ्ङ्जुहोत्यथोदङ्ङत्याक्रम्य चतुर एवाज्यस्य गृहीत्वाह सोमायानुब्रूहीत्यत्याक्रम्या-श्राव्याह सोमं यजेति । वषट्कृते दक्षिणार्धपूर्वार्धे प्रतिमुखं प्रवाङ्ङ्जुहोत्यथोपस्तीर्य दक्षिणस्य पुरोडाशस्य पूर्वार्धादवद्य-त्याहाग्नये ऽनुब्रूहीत्यथैनमुपतिष्ठते मा भेर्मा संविक्था मा त्वा

1 Thus J Sāy.; नुपविश्य॰ Bo BF; नपविश्य॰ H; T omits नू altogether.

2 Instead of एह वक्षद् J has: चावचक्षद् i.e. चा च वक्षद् (as Bhār. Āpast. and Hir.)

3 Thus BH Sāy.; चौपभृतमाज्यं F; चौपभृतमाज्यस्य Be J.

4 नुपूर्वꣳ all the MSS. and Sāy. except T, which has ॰पूर्वं

शिरश्चिदं मा ते तेजो ऽपक्रमीदित्यथैनमभिमृशति भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हिंसीरिति पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति यदवदानानि ते ऽवद्यन्विलोमाकार्षमात्मनः। आज्येन प्रत्यनज्म्येनत्तत आप्यायतां पुनरित्यथात्याक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोत्यथ चतुर आज्यस्य गृहीत्वाह प्रजापतय इत्युपांशु- ष्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह प्रजापतिमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोत्यथोपस्तीर्योत्तरस्य पुरोडाशस्यापरार्धादवद्यन्नाहाग्नीषोमाभ्यामिति पौर्णमास्यामिन्द्राय वैमृधायेति चेन्द्राग्निभ्यामित्यमावास्यायामसंनयत इन्द्रायेति संनयतो महेन्द्रायेति वा यदि महेन्द्रयाजी भवति ॥ १६ ॥

समान उपस्तरणः समानो ऽभिमर्शनो ऽपरार्धादवदाय पूर्वार्धादवद्यत्यभिघारयति समानः प्रत्यञ्जनो ऽत्याक्रम्याश्राव्याहाग्नीषोमौ यजेति वषट्कृते जुहोत्यथोपस्तीर्य द्विः पुरोडाशस्यावद्यन्नाहेन्द्रायानुब्रूहीति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति द्विः पुरोडाशस्यावद्यति द्विः शृतस्य द्विर्दध्नो ऽभिघारयति प्रत्यनक्त्यत्याक्रम्याश्राव्याहेन्द्रं यजेति महेन्द्रमिति वा यदि महेन्द्रयाजी भवति वषट्कृते जुहोत्यथोपस्तीर्य दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यन्नाहाग्नये स्विष्टकृते ऽनुब्रूहीति सकृद्दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यति सकृदुपांश्वाज्यस्य सकृदुत्तरस्य पुरोडाशस्य सकृच्छृतस्य सकृद्दध्नो द्विरभिघारयति न प्रत्यनक्त्यवत्ते स्विष्टकृति स्रुवेण पार्वणौ होमौ जुहोत्यृषभं वाजिनं

वयं पूर्णमासं यजामहे। स नो दोहतां सुवीर्यꣳ रायस्पोषꣳ सहस्रिणम्। प्राणाय सुराधसे पूर्णमासाय स्वाहेति पौर्णमास्याममावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना। सा नो दोहतां सुवीर्यꣳ रायस्पोषꣳ सहस्रिणम्। अपानाय सुराधसेऽमावास्यायै स्वाहेत्यमावास्यायामत्याक्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतमेवमाहवनीयेऽनुप्रहरत्यथैनत्स्रुवेणाभिजुहोत्यथोदङ्ङत्याक्रम्य जुह्वामप आनीय संक्षालनमन्तःपरिधि निनयति वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम्। स नः पितरं पितामहं प्रपितामहꣳ सुवर्गे लोके गच्छतु पिन्वमानꣳ स्वधा नम इति। निर्णिज्य स्रुचं निष्ट्याद्भिः पूरयित्वा बहिःपरिधि निनयतीमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये। घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन्नित्यथैतदौपभृतमाज्यꣳ सर्वत्र एव जुह्वाꣳ समानयते। अथ यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवद्यति दक्षिणस्य पुरोडाशस्योत्तरार्धाद्यवमात्रमथ्यायो यवमात्राद्वाज्यावात्तत्यतामिदम्। मा रूपाम यज्ञस्य शुद्धꣳ स्विष्टमिदꣳ हविरित्यथैनत्स्रुवदण्डेनाभिघार्य जघनेन प्रणीताः सादयित्वाद्भिः स्रुवदण्डꣳ सꣳस्पर्शयिवदधाति[१]। ॥ १७ ॥ चतुर्दशः ॥

अथ कꣳसं वा चमसं वेडोपहवनं याचति। तमन्तर्वेदि निधाय तस्मिन्नुपस्तीर्य दक्षिणस्य पुरोडाशस्य दक्षिणार्धात्प्रत्यावद-

१ Thus BH Sāy., सꣳस्पृश्य JFT Be.

धाति मनुना सृष्टां घृतपदीं मित्रावरुणसमीरिताम्। दक्षिणार्धादसंभिन्दन्नवद्यन्त्येकतोमुखामिति। द्वितीयमवदानानि संभिद्यावदधात्यथ[1] दक्षिणस्यैव पुरोडाशस्य पूर्वार्धात् त्र्यङ्गुलं वा चतुरङ्गुलं वान्येन सुसंलग्नꣳ संतर्पयेण ध्रुवां यजमानभागं निदधाति। द्विर्भुवाऽऽदवद्यति द्विहस्तस्य पुरोडाशस्य द्विः प्लुतस्य द्विर्द्विर्भ्रो। ऽभिघारयत्यथ होतुर्द्विरङ्गुलावनक्ति। अग्रेण भक्षयित्वा। चतुरवान्तरेडामवद्यत्युपस्तृणाति। द्विरादधात्यभिघारयति[2]। समन्वारभन्तेऽध्वर्युश्च यजमानश्च ब्रह्मा चाग्नीध्रश्चाथ यत्र होतुरभिजानाति दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इति तद्दक्षिणं[3] पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोत्यथ यत्र होतुरभिजानात्युपहूतोऽयं यजमान इति तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेदित्युपहूतायामिडायामग्नीध आदधाति षडवत्तमुपस्तृणात्यादधात्यभिघारयत्युपस्तृणात्यादधात्यभिघारयति। प्राश्नन्ति। मार्जयन्तेऽथाह ब्रह्मणे प्राशित्रं परिहरेति। परि प्राशित्रꣳ हरन्त्यन्वपोऽनु वेदेन ब्रह्मभागमथान्वाहार्यं याचत्युद्दासयन्त्येतद्धविरुच्छिष्टम्॥ १८॥ पञ्चदशः॥

अथ संप्रैषमाह ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीदग्नीन् सकृत्सकृत्संमृड्ढीति। प्रसूतोऽथैताꣳ समिधं मध्यत आहवनी-

---

१ संभिद्यैवावद० Sāy.; अथ om. JT.

२ Thus Be BH Sāy., the other MSS. are more or less corrupt

३ Thus H Sāy.; तंदक्षिणं TJF; महान्तदक्षिणं B; अथ दक्षिणं Be.

स्रुवाभ्यादधात्यथैव चाग्नीध्रो ऽन्यैरेवैध्मसंनहनैः परिधीन्
संमार्ष्टि मध्यमम्̐ सदक्षिणार्धम्̐ सकृदुत्तरार्धम्̐ सकृदा-
हवनीयमुपवाजयत्यग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं
जिगिवाम्̐सं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्ना-
दमन्नाद्यायेत्यथैतानीध्मसंनहनान्यद्भिः सम्̐स्पर्श्याहवनीये[1] ऽनुप्रह-
रति यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं
मा हिम्̐सीरेतदस्तु हुतं तव स्वाहेत्यथ जुह्वपभृतावादायात्या-
क्रम्याश्राव्याह देवान्यजेति वषट्कृते जुहोति यज यजेति
चैनम् प्रतीचो ऽनूयाजान्यजति प्राचामन्ततः संभिनत्त्यथोदङ्ङत्या-
क्रम्य यथायतनम्̐ स्रुचौ सादयित्वा वाजवतीभ्याम्̐ स्रुचौ व्यूहति
वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदिति दक्षिणेन जुह्वमुदूहा-
त्यथा सपत्नाम्̐ इन्द्रो मे निग्राभेणाधराम्̐ अकरिति सव्येनो-
पभृतं निरस्यत्युद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्निति
प्राचीं जुहूमूहत्यथा[2] सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यता-
मिति प्रतीचीमुपभृतं प्रत्यूहति प्राच्या[3] परिधीनक्ति वसु-
भ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरमथो-
पभृतमद्भिः सम्̐स्पर्श्य यथायतनम्̐ स्रुचौ सादयित्वा स्रुक्षु प्रस्त-
रमनक्त्यक्तम्̐ रिहाणा इति जुह्वामग्राणि वियन्तु वय इत्युपभृति
मध्यानि प्रजां योनिं मा निर्मृक्षमिति ध्रुवायां मूलान्यथ प्रस्त-

---

१ Thus Sāy., संस्पृश्य or संमृज्य MSS.

२ Thus Be T Sāy.; [उपहत्य॰ HJ Keś.; in BF this whole passage is wanting.

३ Instead of प्राच्या (thus TF Be Sāy.) the other MSS. have जुह्वा ।

रास्नायं प्रच्छिद्य जुह्वामवदधात्यथाश्रावयत्यो श्रावयास्तु श्रौषडिषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति । तमुपरीव प्राञ्चं प्रहरति नात्ययं प्रहरति न पुरस्तात्प्रत्यस्यति न प्रतिशृणाति न विष्वञ्चं [1]वियौत्यूर्ध्वं स्रुचौत्याप्यायन्तामाप ओषधयो मरुतां पृषतय स्थ दिवं गच्छ ततो नो वृष्टिमेरयेत्यथाग्नीध्रमीक्षते ऽग्नीदिति । तमाहाग्नीध्रः संवदस्वेत्यगानग्नीदित्याहाध्वर्युरगन्नित्याहाग्नीध्रः । श्रावयेत्याहाध्वर्युः । श्रौषडित्याहाग्नीध्र । इदं ब्रूहीत्याहाध्वर्युरनुप्रहरेत्याहाग्नीध्रो । ऽनुप्रहरति । स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्यथोपोत्थायाहवनीयमुपतिष्ठत आयुष्पा अग्ने ऽस्यायुर्मे पाहि चक्षुष्पा अग्ने ऽसि चक्षुर्मे पाहीत्यथेमामभिमृशति ध्रुवासीति । मध्यमं परिधिमनुप्रहरति यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयाता इत्यथेतरावुपसमस्यति यज्ञस्य पाथ उप समितमित्यथैनान्संस्रावेणाभिजुहोति । जुह्वामुपभृतꣳ संप्रस्रावयति संस्रावभागा स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहेत्यथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य धुरि युग्यौ विमुञ्चत्यग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातमिति । यद्यु वै नानो भवत्युत्कर एवैने स्फ्ये विमुञ्चत्येतेनैव मन्त्रेण । ॥ १९ ॥ षोडशः ॥

---

१ Thus (वियौति) Bc JF Sāy. Mādh., बूयति B, बूति H, वयति T.

अथादत्ते दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन जुहूं होत्रे वेदं प्रदाय । प्रदक्षिणमावृत्य प्रत्यञ्चावाक्रमतो । दक्षिणेनाध्वर्युर्गार्हपत्यं परिक्रामत्युत्तरेण होता । तौ जघनेन गार्हपत्यं पश्चात्प्राञ्चावुपविशतो दक्षिण एवाध्वर्युरुत्तरो होताथाध्वर्युर्वेदमुपभृतं कृत्वा चतुर आज्यस्य गृहीत्वा आह सोमायेत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोति । चतुर एवाज्यस्य गृहीत्वा आह त्वष्ट्र इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोति । चतुर एवाज्यस्य[1] गृहीत्वा आह देवानां पत्नीभ्य इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह देवानां पत्नीरित्युपांशु यजेत्युच्चैर्वषट्कृते परिश्रिते देवानां पत्नीर्जुहोत्यथ चतुर एवाज्यस्य[1] गृहीत्वा आहाग्नये गृहपतय इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याहाग्निं गृहपतिमित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथाग्रेण होतारमुपातीत्य होतुर्दिरञ्जुवावनक्ति । जिह्वेण भक्षयित्वा । चतुर्हस्तेडां[2] संपादयत्याज्यस्यैव । समन्वारभेते अध्वर्युश्चैव पत्नी चोपहूतायामिडायामग्नीध आदधाति चतुरवत्तं । प्राश्नीतो । मार्जयेते[3] । अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्याहृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसले

---

१ Thus BT Sāy., the other MSS. omit एव; Be throughout चतुराज्यस्य ।

२ Thus B Be JH Keś. Sāy. (pr. m.); चतुरवत्तं° TF; चतुर्वस्त्यं° Sāy. sec. m.

३ Corrected; मार्जयेतेथ Be JFHT; मार्जयतेथ B.

अथ शूर्पे आस्थिनेष दृषदि कृष्णाजिने यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेत्यथापरं चतुर्गृहीतं गृहीत्वाऽऽहार्यपचन एवेध्मसंनहनान्यभ्याधाय फलीकरणानोप्य फलीकरणहोमं जुहोत्यग्नेऽदब्धायोऽशीततनो पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिं स्वाहेत्यथैतेनैव यथेतमेत्य [वेदेर्यजमानं वाचयति वेदोऽसि वित्तिरसीत्यास्मादनुवाकस्य][1] होत्रे वेदं प्रदाय पत्नीं[2] विष्यतीमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमीत्यथास्यै योक्त्रमञ्जलावाधायोदपात्रमानयति समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याहं गच्छे समात्मा तनुवा ममेत्यथ मुखं विमृष्टे यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वतीत्यपो निनयत्यवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति ब्राह्मणम् ।

॥ २० ॥

अथैनां तथैव[3] तिरः पवित्रमप आचामयति पयस्वतीरोष-

---

1 The words enclosed in brackets found only in BH; om. Bo JFT Sāy.

2 Sāyaṇa has पत्नी and defends this reading, but knows also the reading पत्नीं ।

3 om. J Bo; तथैवं B.

[illegible] पशुः । [illegible] मामिन्द्र बहुस्रुवेत्यथैनां[1] गार्हपत्ये समिधमाधायाग्ने व्रतपते व्रतमचारिषं तदशकं तन्मे ऽराधि स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मे ऽराधि स्वाहेत्यथ यथाप्रपन्नं निष्क्रामयत्यथ[2] प्राक्रेत्य ध्रुवामाप्याययत्याप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधो ऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्नित्यथाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोत्याश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताहुतिरेतु देवान्स्वाहेत्यथ यज्ञसमृद्धीर्जुहोतीष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा दौराध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा सर्वसमृद्ध्यै स्वाहा भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन्मनसा हितः। अयासन्हव्यमूहिषे ऽया नो धेहि भेषजꣳ स्वाहायाश्चाग्ने ऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि। अयसा मनसा धृतो ऽयसा हव्यमूहिषे ऽया नो धेहि भेषजꣳ स्वाहा यदस्मिन् कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा। अग्नयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा यदस्य कर्मणो ऽत्य-

---

१ TF insert तथैव.

२ निष्क्रामत्यथ Be Sāy.; क्रामत्यथ J.

रीरिषं यदा नूनमिषाकरम् । अग्निष्टत् स्विष्टकृद्विद्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाꣳ समर्धयित्रे स्वाहा । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहेत्यथ बर्हिषो धाद्मनाꣳ संप्रलुष्य ध्रुवायाꣳ समनक्ति समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तामित्यथैनदाहवनीये ऽनुप्रहरति दिव्यं नभो गच्छतु यत्स्वाहेत्यथोपोत्थाय दक्षिणेन पदा वेदिमवक्रम्य¹ ध्रुवया समिष्टयजुर्जुहोति देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युदूहति स्रुचं ' निनयति प्रणीता ' उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान्क्रामते ' संतिष्ठत आमावास्यं वा² पौर्णमास्यं वा हविः ' ॥ २१ ॥ सप्तदशः ॥

इति प्रथमः प्रश्नः ॥

---

१ अतिक्रम्य Bo H, आक्रम्य T.

२ om. JB; वा om. both times Bo.

अथोपव्याहरणं। विज्ञायते क्रत्वादौ क्रतुकामं कामयीत[१] यज्ञाङ्गादौ यज्ञाङ्गकाममिति। प्राक्कूलान्दर्भान्संस्तीर्य तेषु प्राङ्मुखो यजमान उपविश्य जपति याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः। ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे॥ देवा गातुविदो गातुं यज्ञाय विन्दत। मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति[२] अद्य एधि[३] सत्येन त्वा क्रयामीत्याकूत्या वेदनं करोत्याकूत्यै त्वा कामाय त्वा समृधे त्वा पुरो दधे। अमृतत्वाय जीवसे॥ आकूतिमस्यावसे काममस्य समृध्यै। इन्द्रस्य युञ्जते धियः॥ आकूतिं देवीं मनसः पुरो दधे यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टमिति। मनसा चिः संकल्पयते चिरुक्तैः। सर्वकामो ऽग्नीनाधास्य इत्यग्न्याधेये। स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्य इति दर्शपूर्णमासयोः। स्वर्गकामश्चातुर्मास्यैर्यक्ष्य इति चातुर्मास्येषु। स्वर्गकामः पशुना यक्ष्य इति पशुबन्धे। स्वर्गकामः सोमेन यक्ष्य इति सोमे। स्वर्गकामो ऽग्निं चेष्य इत्यग्निचये। ऽहीने ऽयने वा यथाकामो यत्कामो वा यजते। तन्म ऋध्यतां तन्मे समृध्यतां तन्मे संपद्यतां काम इत्यर्थलिंगां[४] प्रतिवचनं तत्त ऋध्यतां तत्ते समृध्यतां तत्ते संपद्यतां काम इत्यों तथेति प्रतिवचनम्। ॥ १ ॥

---

१ Thus Be JF Keś.; कामयेत BT; H corrupt.

२ After इति B has अज्ञामाज्ञयते.

३ Thus HBT; एधीति JF; इह्वि इति Be.

४ Thus BHT, अथ ऋलिंगां the other MSS.

अथर्त्विजो[१] देवयजनं याचते । ऽध्वर्यो देवयजनं मे देहीत्यध्वर्युमादित्यो देवो दैवो ऽध्वर्युः स ते देवयजनं ददात्विती तथेति प्रतिवचनं । ब्रह्मन्देवयजनं मे देहीति ब्रह्माणं । चन्द्रमा देवो दैवो ब्रह्मा स ते देवयजनं ददात्विती तथेति प्रतिवचनं । होतर्देवयजनं मे देहीति होतारमग्निर्देवो दैवो होता स ते देवयजनं ददात्विती तथेति प्रतिवचनमुद्गातर्देवयजनं मे देहीत्युद्गातारं । पर्जन्यो देवो दैव उद्गाता स ते देवयजनं ददात्विती तथेति प्रतिवचनꣳ । सदस्य देवयजनं मे देहीति सदस्यमाकाशो देवो दैवः सदस्यः स ते देवयजनं ददात्विती तथेति प्रतिवचनꣳ । होत्रका देवयजनं मे दत्तेति होत्रकानापो देव्यो दैव्या होत्राशꣳसिन्यस्तास्ते देवयजनं ददत्विती तथेति प्रतिवचनं । चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यूꣳरश्मयो देवा दैवाश्चमसाध्वर्यवस्ते[२] देवयजनं ददत्विती तथेति प्रतिवचनमपि वा न देवयजनं याचत । आदित एव तीर्थे स्नात्वोदेत्याहतं वासः परिधाय । शुक्लो हैव शुचिः पूतो मेध्यो विपाप्मा ब्रह्मचारी सहकारिप्रत्यय आ चतुर्थात्कर्मणो ऽभिसमीक्षमाणो वेदकर्माणि प्रयोजयेत्प्रागपवर्गाण्युदगपवर्गाणि वा प्राङ्मुखः प्रदक्षिणं यज्ञोपवीती दैवानि कर्माणि करोति । दक्षिणामुखः प्रसव्यं प्राचीनावीती पित्र्याणि । तिष्ठन्नासीनः प्रह्वो वा यथान्यायं । छन्दोगब्राह्मणं यथा वै दक्षिणः पाणिरेवं

---

१ Thus HJT Be, अथ ऋत्विजो BJ.

२ Thus T, दैव्याश्च° the other MSS.

देवयजनं यथा सद्यस्तथा पितृयजनं यथा पितृयजनं तथा श्मशानकरणं यथा श्मशानकरणं तथाभिचरणीयेष्विष्टिपशुसोमेष्वादित एव[1] पुरोदकं देवयजनं यस्मादन्यत्पुरस्तात्समन्तिकं देवयजनं न विन्देयुरुत्तरतो देवयजनमाचमति-ष्मिनष्टि ॥ २ ॥ प्रथमः ॥

अथर्त्विजां वरणं विज्ञायते ब्राह्मणा[2] ऋत्विजो योनिगोत्रश्रुतवृत्तसंपन्ना[3] अविगुणाङ्गा[4] अश्विक्लिणिनो न परिव्याधिक्रान्ता नान्तगा नान्यजा नाननूचाना[5] श्यालेयवालेयपुत्रिकापुत्रपरक्षेत्रसहोढकानीनानुजावरद्विप्रवरान्परिहाप्याङ्गिरसो[6] ऽध्वर्युर्वासिष्ठो ब्रह्मा वैश्वामित्रो होतायास्य उद्गाता कौषीतकः सदस्यो ऽवशिष्टा[7] भृगवो ऽङ्गिरसो वा योनिर्वृत्तं विद्या च प्रमाणमित्येके तांस्त्वेहूणीताध्यापकाङ्गानेव वृणीताकुनखिनमध्वर्युमक्लिलासिनं ब्रह्माणमखण्डं[8] होतारमकाणमुद्गातारमशिपिविष्टं सदस्यमथ[9] प्रतिप्रस्थाता नेष्टोन्नेतेत्यध्वर्युपुरुषा ब्राह्मणाच्छंस्याग्नीध्रः पोतेति ब्रह्मणो मैत्रावरुणो ऽच्छावाको

१ आदित एव found only in Be F, but commented on by Bh

२ Thus H Be BF, ॰णान् the other MSS.

३ Thus Be BHF ; संपन्नं T ; संपन्नान् J.

४ Thus all except J which has ॰णांगान् ।

५ Thus H Be BT. नाननूचानान् J, नांनूचानां F.

६ Thus, or परिहाप्य Be HFJ, परिहप्य T, परिहाप्यं B.

७ Thus Venk. in his bhāṣya on the Karmānta ; the MSS. have वसिष्ठा or वसिष्ठा except F, which has वसि ।

८ Thus BT and J (sec. m.) ; खण्डं Be HFJ (pr. m.)

९ अथ om. BT Be.

ग्रावस्तुदिति होतुः । प्रस्तोता प्रतिहर्ता सुब्रह्मण्य इत्युद्गातुरभिगरो भुवगोपः सङ्ख्याव इति[1] सदस्यस्य । स्वप्रधाना[2] । स्वस्वप्रधाना[2] इत्येके[2] । दश वैकादश वा चमसाध्वर्यवो । ऽन्यद्दक्षिणाभिः परिक्रीता भवन्तीति विज्ञायते । तस्मादग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विग्दर्शपूर्णमासयोश्चत्वार ऋत्विजो ऽध्वर्युर्ब्रह्मा होताग्नीध्र इति । चातुर्मास्येषु प्रतिप्रस्थाता पञ्चमः । पशुबन्धे मैत्रावरुणः षष्ठः । सर्वे सौम्ये ऽध्वरे । तान्कर्मणःकर्मणो वृणीतैकैकमुपसंगृह्य चोदयेदमावहमाध्वर्यवेण त्वा गच्छामि याजयतु मां भवानिति । ब्रह्मत्वेन हौत्रेणौद्गात्रेण सादस्येनेति । न सदस्यो विद्यत इत्येके । स्वेनस्वेन कर्मणा होत्रकान्[3] होत्रकानित्येके[3] । तत्पुरुषा होत्रकाश्चमसाध्वर्यवश्चाध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन सोमो योक्तव्य इति । ॥ ३ ॥

आदित्यो देवो दैवो ऽध्वर्युः स मे ऽध्वर्युरध्वर्यो ऽध्वर्युं त्वा वृण इत्यध्वर्युमादित्यो देवो दैवो ऽध्वर्युः स ते ऽध्वर्युस्तेनानुमतः कर्मैवाहं करिष्यामीत्यों तथेति प्रतिवचनं । चन्द्रमा देवो दैवो ब्रह्मा स मे ब्रह्मा ब्रह्मन् ब्रह्माणं त्वा वृण इति ब्रह्माणं । चन्द्रमा देवो दैवो ब्रह्मा स ते ब्रह्मा तेनानुमतः कर्मैवाहं करिष्यामीत्यों तथेति प्रतिवचनमग्निर्देवो दैवो होता

१ सङ्ख्याव B Be JH, संश्रावयति T, सङ्ख्यावयति F, with स Bh.

२ Thus Bo, स्वप्रधानाः स्वप्रधाना इत्येके J ; स्वप्रधान स्वस्वप्रधान इत्येके B ; स्वधान स्वस्वप्रधानाइत्येके F ; स्वप्रधाना इत्येके H ; स्वस्वप्रधाना इत्येके T.

३ Thus B ; होत्रकाश्च होत्रका इत्येके F ; होत्रकान्होत्रकानित्येके JHF ; Bo om न होत्रकान् ।

स मे होता होतर्होतारं त्वा वृण इति होतारमग्निर्देवो दैवो होता स ते होता तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनं । पर्जन्यो देवो दैव उद्गाता स म उद्गातोद्गातरुद्गातारं त्वा वृण इत्युद्गातारं । पर्जन्यो देवो दैव उद्गाता स त उद्गाता तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमाकाशो देवो दैवो सदस्यः स मे सदस्यः सदस्य सदस्यं त्वा वृण इति सदस्यमाकाशो दैवो देवः सदस्यः स ते सदस्यस्तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमापो देव्यो दैव्या होत्राशंसिन्यस्ता मे होत्राशंसिन्यो होत्रका होत्रकान्त्वा वृण इति होत्रकानापो देव्यो दैव्या होत्राशंसिन्यस्तास्ते होत्राशंसिन्यस्ताभिरनुमताः कर्मैव वयं करिष्याम इत्योँ तथेति प्रतिवचनꣳ । रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यवश्चमसाध्वर्यून्त्वा वृण इति चमसाध्वर्यूꣳरश्मयो देवा दैवाश्चमसाध्वर्यवस्ते ते चमसाध्वर्यवस्तैरनुमताः कर्मैव वयं करिष्याम इत्योँ तथेति प्रतिवचनं । वृतोऽवृतो जपति महन्मे ऽवोचो यशो मे ऽवोचो भगो मे ऽवोचो भर्गो मे ऽवोचस्तपो मे ऽवोच स्तोमं मे ऽवोचः क्लृप्तिं मे ऽवोचो भुक्तिं मे ऽवोचो, विश्वं मे ऽवोचः सर्वं मे ऽवोचः सर्वं मे कल्याणमवोचस्तन्मावतु[1] तन्माविशतु तन्मा जिन्वतु तेन भुक्षिषीय देवो देवमेतु[2] सोमः सोममेत्वित्योँ तथेति प्रतिवचनम् ॥ ४ ॥

---

1 Thus only T, the other MSS.: तन्माभवतु ।

2 Thus only F, the other MSS. have here and further on एति instead of एतु, TB omit the whole passage; cp. Pañc. Br. I. 1. 2.

[१]सिंहे मे मन्युर्व्याघ्रे मेऽन्तरामयो' वृके मे क्षुद्बस्ते मे घर्मिधिन्वनि मे पिपासा' राजन्दहे मेऽशनायाश्वाणि मे तन्द्रिर्गर्दभे मेऽमः[२] [illegible] अक्के[३] मे क्षौरन्यत्ये मे वेपथुः' कूर्मे मेऽङ्गरोगो' वस्ते मेऽपवर्यांग्निये मे मृत्युर्व्याहय्ये मे पाप्मा' सपत्ने मे निर्ऋतिर्दुष्कीर्तौ मे बुद्धिः' परस्वति मेऽसम्बुद्धिः' खड्गे म आर्तिर्गवये म आन्ध्यं' गौरे मे बाधिर्यम्हये मे शोको' गोधायां मे खेदो[४]' जरायां मे हिमः' कृष्णशकुनौ मे भीरुता' कशे मे पापो गन्ध' उलूके मे भयः[५]' कोके म ईर्ष्या' मर्कटे मे दुर्बुद्धिः' कुकले मे मन्युर्वातले मे प्रयोाह्णे[६] मे तृष्णा'र्ये मे श्रमो' ऽव्यां म आर्ध्यं' कोशे मे गन्धः' कुमार्यां मेऽलङ्कारः' सूकरे मे क्रदथुः[७]' पृदाकुनि[८]

---

१ The construction of the text of this khaṇḍa is extremely difficult. I compared also the printed Prayogamālā of Veṅkaṭeśvara (Vol. II, fol. 36), the MS. I. O. 288, fol. 12, a very old MS., corrected, and the Gṛhyaprayoga according to the MS. of Burnell's collection The MSS. have, of course, nowhere the avagraha.

२ Thus only B and Pray. Mālā, मेरिमः the other MSS.

३ Thus Be, अम्बके IO, अम्बके H, मध्यके FT, मज्वके J, अंयके B, शंबुके Pray. M.

४ Thus Be, the other MSS. खेदो।

५ Thus all except T which has अयमः।

६ प्रयो॰ TB, IO, प्रोध्यो F, प्रवो Be, प्रवो H, प्रभो J. Perhaps ऽप्रभा is to be read?

७ Thus H; कदथुः IO, कंदथुः Pray. M.; क्रदथुः the other MSS.

८ Thus all except Pray. M.: प्रदाकुनि. Probably पृदाकुनि is to be read.

मे स्वप्नो । ऽजगरे मे दुःस्वप्नो । विद्युति मे स्मयश्रो[1] । लोभायां मे क्लेदः । ग्रजभे[2] मे पाप्मालक्ष्मी । स्त्रीषु मे ऽनृतमंजासु मे कर्कश्रो । व्रात्ये म ईत्या । शूद्रे मे स्तेयं । वश्य मं ऽकामंहत्यं[3] । राजन्यबन्धुनि मे ऽज्ञानं । नैषादे मे ब्रह्महत्या । कुलिङ्गे मे चवपुत्सले[4] मे विलाप । उद्रिणि मे वमतिः[5] । किंपुरुषे मे रोदो । द्वीपिनि मे मिष्टपर्द्वस्तिनि मे किलासः । शुनि मे दुरिमङ् । स्वावन्येषु[6] मे स्वेच्छो । विदेहेषु मे ग्रौपथो[7] । महावर्षेषु मे स्लौमूंजवत्सु मे तप्ना । दुन्दुभौ मे कासिके । स्वाकुषु[8] मे पित्तं । कलिङ्गेषु मे ऽमेध्यमंश्वतर्था मे ऽप्रजस्ता । पुंश्चल्यां मे दुश्चरितमाखुनि मे दन्तरोगो । मक्षिकायां मे स्वल्कशः[9] । शुके मे हरिमा । मयूरे मे जल्प्या । श्वे मे जरा । षाषे मे पापवादो । ऽप्सु मे श्रमो । ब्रह्मोज्झे मे किल्बिषमपेहि पाप्मन्पुनरपनाशितो भवा नः पाप्मन्सुकृतस्य लोके पाप्मन्धेह्यविहृतो[10]

१ Thus Bo BHT, स्मयश्रो F, स्मयश्रो J, स्मयश्रो Pray. M.

२ Thus BJT Pray. M., Prayoga Burnell; ग्रभे H, ग्रदभे Be F, IO.

३ Thus (without avagraha) Be BHJT; कर्मंहत्यं F, Pray. M.

४ Thus Be BJHT, IO, Pray.; उलुले F; कुलले Pray. M.

५ वमतिः Be BHFT, IO, Pray; वमतिः J, Pray M. Is the word चवमतिः or a subst. connected with वमिति ?

६ Thus Bo BHFT, Pray., Pray. M.; स्वाव° J, IO.

७ Thus Be JT; ग्रौयथो F, ग्रौपथुर् B, H uncertain, ग्रिपथुः Pray., गपथो IO. चपथो Pray. M.

८ Thus BT Pray., the other MSS. कासिके° ।

९ Thus Bo BJHF, स्वल्कशः T, स्वल्कुशः Pray. M.

१० Without the least doubt the tradition of these verses according to the Baudhāyanins is corrupt. A comparison with Ath. Saṃh VI. 26 proves that we ought to read चवङ्कुमान् (comp. वः) instead of चविङ्कुनो and अवाषि instead of अषानि ।

यो नः पाप्मन्न जहाति तमु त्वा जहिमो वयमन्यत्रास्मन्नि-
विशताꣳ[1] यदसावो अमर्त्यो यो नो द्वेष्टि स रिष्यतु यमु
द्विष्मस्तमु जहीत्यथाप उपस्पृशति सुमित्रा न आप
ओषधयः सन्त्विति तां दिशमेता अप उत्सिञ्चति[2] यस्यामस्य
दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं
द्विष्म इत्यथाप उपस्पृश्य यथेतं प्रतिप्रयन्ति ॥ ५ ॥ द्वितीयः ॥

अथेदमन्वाधेयं तस्य कः कर्मण उपक्रमो भवतीत्युक्ता-
न्यृतुनक्षत्राण्युक्तमात्मनः पुरश्चरणं कथमस्यानुपूर्व्यं[3] भवति
स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणपुण्याहवाचनानि अङ्गुलमाल्यया-
कृत्या वेदनं कृत्वोपव्याहृत्यर्त्विजो[4] वृत्वार्हयित्वा देवयजनं
याचित्वा देवयजनमादाय स्फ्यमादायान्तरेण वेद्युत्करावुद्द्रम्य
प्रपद्य जघनेन गार्हपत्यं तिष्ठन्प्राचीनꣳ[5] स्फ्येन गार्हपत्यस्याय-
तनमुद्धन्त्युद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु।
शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसा-
तेत्यथैनदद्भिरवोक्षति शं नो देवीरभिष्टय आपो भवन्तु
पीतये। शं योरभिस्रवन्तु न इत्येवमेवान्वाहार्यपचनस्यायतन-
मुद्धन्त्येवमेवाहवनीयस्यैवमितरयोर्यदि करिष्यन्भवत्यथान्तरेण

१ Thus Bo HF. 10; the other MSS. °त्रास्मिन्नि° or °त्रास्मिन्नि°।

२ Thus only B Bo and partially T, cp. Pray M loc. cit. the other MSS. have this passage as infra IV. 7, 8 f.

३ Thus all except H, which has पूर्वं।

४ Thus BTJ, कृत्वार्त्विजो F, कृत्व ऋत्विजो Bo H

५ Thus BT, the other MSS. प्राचीꣳ।

यद्राज्यं पयो वानस्पत्यश्वा इति । गौरेवाम्नायमाम्नातांश्च-क्षमा[१] अम्बरीषं वोत्तपनीयं वाभिप्रजन्त्यपि वौपासनमेक-भिप्रजन्त्यर्धमौपासनं कुर्वन्ति सर्वं वा । प्राच्यौदगिकमौपा-सनं कुर्वन्ति । सो ऽत्र वैव हि ह्यत इति । समानं कर्मा संभारनिर्वपनादथ तृतीयस्य संभाराणां द्वेधा विभज्य सभ्याव-सथ्ययोराहवनीये वा सभ्यावसथ्ययोः संकल्पः । समानं कर्मा समिदाधानात्पर्यवपश्च नानावृक्षीयाः समिधो ऽभ्यादधाति । कथमत्रानुपूर्व्यं भवत्यश्वत्थस्योदुम्बरस्य पर्णस्य शमी च विकङ्कत-स्येत्येतदत्रानुपूर्व्यं भवति । कथमु खल्वैन्द्राग्नादित्ययोरन्त इत्यै-न्द्राग्नादित्ययोरन्त[२] उदवसपदिकस्य सृजेत्ततो ऽन्यं द्वयसोमर्थ-मुद्धरेदिति । तन्त्रसमास[३] एवैतदुपपद्यते नान्यत्र प्रणीतस्याग्ने-र्लौकिकत्वादस्मिन्होत्रा ऽत इतस्य [४]स्वात्मो ऽग्निः । कर्मान्तं[५] तस्य धारणमित्यपवृत्ते कर्मणि लौकिकः संपद्यते । प्रसिद्धानि तनू-हवींषि । प्रसिद्धा अन्वाधेयदक्षिणा ददाति । तास्वेवाधिग-च्छेदासाङ्गस्येतावन्ति मन्यान्यौदनान्येतावतो दद्यात्तेनो हैवैतं

---

१ Thus HTJ; गौरेव धामाम्नात् B; गौरेवांशसमाम्नात् F; गौरेवांशसमा-साम्नात् Be.

२ Thus only T; Be ॰योरंत्य (the first time); J कथमपैन्द्राग्ना etc. as T; B om. इत्यै॰न्त; H incomplete here; F इतींद्रा॰ instead of इत्यैन्द्रा॰ ।

३ संच or सन्न Be BTJ; सच HF.

४ Thus HB Be; स्वात् om. T.

५ चग्निकर्मा॰ FT.

काममवाप्नोतीत्येकां गां दक्षिणां दद्यादिति पैङ्ग्यायनि-ब्राह्मणं भवति । न ह्येवानाहिताग्निः कामिंश्नुते[1] च देवानां वा एषो ऽन्यतमो य आहिताग्निरित्यथ यद्दक्षिणाग्निमुद्धरति सहस्रं तेन कामदुघो ऽवरुन्द्धे । ऽथ यदग्निहोत्रं जुहोति सहस्रं तेनेत्यपरिमितमेवेदमुक्तं भवति[2] । ॥ ७ ॥ तृतीयः ॥

अथाग्न्याधेयस्योपवसथ इत्युपकल्पयते गां माऽऽसनामन्तं वाससी चतुर उदकुम्भाऽऽश्चतुरौदुम्बराञ्छकलानौदुम्बरीं[3] दर्वीमेकां वपाश्रपणीमविशाखामौदुम्बरीमेव सर्वानेवान्यान्स्वाकोपाकात्पे-त्ययज्ञिकान्संभारानेरकोपबर्हणे[4] आञ्जनाभ्यञ्जने आज्यं दध-सुपिंष्ट स्फ्यं सूपमिति । दक्षिणत एतत्परिश्रितं भवति । तस्यैतस्मिन्परिश्रिते प्राग्वात्मत्स्य केशान्तं करोति तूष्णीं चौपि दर्भपुञ्जीलान्युपनियत्य वपति वपे[5] प्रवपे[6] देवेन सविता प्रसूतो ब्रह्मणा संश्रितो ऽहं यानि म इत ऊर्ध्वं लोमानि तानि मे स्वस्तये सन्त्वित्यथैनमुपकेशमश्नु° °निकृन्तनमसुदक-

---

१ The words नले॰ ... श्नात् are omitted by BT.

२ Be HFJ repeat the last clause: अपरि॰ ... भवति; BT om. अपरिमितं।

३ Thus Be H; ॰बराञ्छकलान् T; ॰बरांश्छकलान् BJ, ॰बराञ्शकलान् F.

४ स्वाकोपाकात् corrected acc. to Bh.; MSS. ॰कान्।

५ Thus T, वपेत् the other MSS., also Keś.

६ Thus F, प्रवपेत् the other MSS. except H, which omits the syllable पे. The yajus seems to begin with वपे।

७ Thus only Be, निकृत्त the other MSS.

पात्राण्याहरति[1] मधुपात्रं क्षीरपात्रमुदकपात्रं यद्वा भवत्यन्न-प्राशनेभ्यो दद्यादन्यदनुपनिषद्यैतद्वः पितरः पितामहाः प्रपितामहाः पानमित्यथैकैकेनोदकुम्भेन मार्जयति तूष्णीं । तद्यथाप्यर्थमुपविशन्ति चत्वारः पितापुत्राः । पिता पुरस्ताज्ज्येष्ठो दक्षिणतोऽनुजः पश्चात्कनिष्ठ[2] उत्तरतो । द्वादशाचाप्पिता प्रविशन्ति । तद्विजयते । द्वादश ज्येष्ठोऽविजयते । द्वादशानुजोऽविजयते । ऽथ ये ऽतिशिष्यन्ते तान्कनीयांसमुपसमूहन्त्यथ[3] यदि द्वौ भवतो द्विरायामः पितायथैको जाया तृतीयाथ यदि नैव भवन्त्युभौ द्विरायामौ जायापती । एष एव त्रिषु न्यायः । एष एव[4] द्वयोः । कृतं कृतमित्येव[5] व्यपगच्छन्ति । धूता गौरित्युक्तोत्तिष्ठन्त्यथैभ्यो बर्हिरादाय गामुपाकरोति पितृभ्यस्त्वा पितामहेभ्यस्त्वा . प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमीति । तूष्णीमित्येके । ऽथैनामद्भिः प्रोक्षति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टां प्रोक्षामीति । तूष्णीमित्येके । तामपैव प्रतीचीमग्निरश्मौ[6] दक्षिणापदीं संज्ञपयन्ति । तस्यै संज्ञप्तायाः अद्भिरभिषेकं प्राणानाप्यायन्ति तूष्णीं । तूष्णीं वपामुत्खिद्य हृदयमुद्धरति प्रज्ञा-

१ Thus BF and Keś. sec. m.; चाचारयति Be HJ, Keś. pr. m.; चाचारायति T.

२ Thus B Be J and Keś.; कनिष्ठ H; कनीयान् the other MSS.

३ Thus TBJ, the other MSS. more or less corrupt.

४ एव only in B Be H Bh. ५ एव B Be HF, एवं TJ.

६ Thus all the MSS.

तानि यावद्गानानि प्रज्ञातौ च मतस्नू[1] तान्येतेष्वेव शूलेषूपनिष्क्यैतस्मिन्नेवाग्नौ[2] श्रपयन्ति। शृतायां वपायां पञ्च स्रुवाहुतीर्जुहोति ॥ ९ ॥

याः प्राचीः संभवन्त्याप उत्तरतश्च याः। अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः स्वाहा ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या। दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः स्वाहा ॥ अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः ससन्धिकैः। अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः स्वाहा ॥ यन्मे माता प्रलुलोभ चरत्यननुव्रता। तन्मे रेतः पिता वृङ्क्तामाभुरन्योऽपपद्यताꣳ स्वधा नमः स्वाहा ॥ यदः क्रव्यादङ्गमदहल्लोकाननयन्प्रणयञ्जातवेदाः। तद्वो ऽहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः स्वधा नमः स्वाहेति। त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोति सोमाय पितृमते शुष्मिणे जुष्टो हविः। वाजिन्निदं जुषस्व नः स्वगा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ अग्निरस्मत्पूतये यमं पितृमन्तमाह्वे। वैवस्वते दमन्तु नः स्वगा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः। प्र देवेभ्यो वहा[3] हव्यं पितृभ्यश्च स्वगा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहेति।

१ Thus all the MSS.

२ Thus only TJ, the other MSS. corrupt; comp. Baudh. gṛhs. I. 1.

३ वह BF.

*तूष्णीं दर्वीमभ्याधाय पिण्डानामावृतैतान्यवदानानि ददाति षड्यमेवात्रे ऽथ सव्यं मतजुमथ दक्षिणमेतत्ते ततासौ ये च* त्वामनु यांश्च त्वमत्रान्वस्येषा[1] ते तत स्वधाक्षितिर्यावती पृथिवी तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि पृथिव्या क्षितमसि तताय मा क्षेष्ठा इति । द्वितीयं ददात्येतत्ते पितामहासौ ये च त्वामनु यांश्च त्वमत्रान्वस्येषा ते पितामह स्वधाक्षितिर्यावदन्तरिक्षं तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददाम्यन्तरिक्षेण क्षितमसि पितामहाय मा क्षेष्ठा इति । तृतीयं ददात्येतत्ते प्रपितामहासौ ये च त्वामनु यांश्च त्वमत्रान्वस्येषा ते प्रपितामह स्वधाक्षितिर्यावती द्यौस्तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि दिवा क्षितमसि प्रपितामहाय मा क्षेष्ठा इत्यत्र पितरो यथाभागं मन्दध्वमित्युक्त्वा चैकेनोदकुम्भेन मार्जयति तूष्णीमर्थेभ्यो गामुपपरेत्य लोहितमुपप्रवर्तयति यानि रक्षांस्यसृग्भागानि ये चापि पितरो हरन्त्वां विहरन्त्वां तृप्यन्तु रुधिरस्य ते ॥ ये नः पतिता गर्भा असृग्भाज उपासते । तेभ्यः स्वजा स्वधा नमस्तृप्यन्तु मदन्तु च ॥ य आमा ये च[2] पक्वा ये च दुष्टाः पतन्ति नः । तेभ्यः स्वजा स्वधा नमस्तृप्यन्तु मदन्तु च ॥ ये कुमारा या स्त्रियो

१ Here and in the corresponding passages further on the MSS. have ०न्वक्षेषा instead of ०न्वस्येषा ।

२ om. BF and two MSS. of the gṛhya-sutra.

ये ऽविज्ञाताः पतन्ति वः। तेभ्यः स्वधा स्वधा नमस्तु स्वस्त्यस्तु मदन्तु येत्यागतायान्नं ददात्यर्घ्याभ्यञ्जनं ददात्यथ यथाऽर्हमि ददात्यथ पङ्क्तिर्नमस्कारैर्विपर्यासमुपतिष्ठते ऽथ वीरं याचते ऽथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते मनो न्वाहुवामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथैतदहतं वास एवंविदे ब्राह्मणाय दत्त्वान्यदमनीयं[1] वासः परिधाय दक्षिणोपपरेत्याग्निमार्जयते ॥ १० ॥

यासु गन्धा रसा वर्णा बलं च निहिते[2] शुभे। ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ या ऊर्जमभिषिञ्चन्ति देवप्रेषिता महीम्। ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ यासां निष्क्रमणे सर्वमिदं जायते जगत्। ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ याभिरिमे त्रयो लोकास्तेजसा यशसाऽऽवृताः। ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ याः प्राचीर्या दक्षिणा याः प्रतीचीर्या उदीचीर्या ऊर्ध्वा रेवतीर्मधुमतीरापः स्रवन्ति शुक्राः। ता न आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु न इत्यथैतदमनीयं वासो निमुच्यान्यत्परिधाय प्राजापत्ययर्चाग्निमिद्धेति प्रजापते न त्वदेतान्यन्य इत्यथोल्मुकमपिसृजत्यभहतो[3] हविषो जातवेदा

१ Thus H Bo J; अमनीयं the other MSS.

२ Thus Bo HTF; निचिचिते B; निचिवेषु I.

३ Thus HBTJ Be; F reads with Ap. Hir. Bhār. the mantra with औ।

अवाङ्मुख्यानि सुरभीणि कृत्वा । प्रादाः[1] पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरप्येहि देवानित्यथैतान्यवदानानि ब्राह्मणेभ्यो ददाति हृदयमेवाग्रे ऽथ सव्यं सक्थ्नमथ दक्षिणं यथाङ्गमङ्गं कुरुते । गामेतामङ्ग्यग्नः कृत्वा ब्राह्मणेभ्यो वरं[2] ददाति । स[3] ये ह के चैतस्यै मांसं लभन्ते सर्वे ह वा अस्यै ते गोभाजश्चो भवन्त्यामात्ये[4] जयानभ्यातानान्राष्ट्रभृत इति कृत्वामात्यहोमा-ञ्जुहोत्येष ह वा उपवसथ । उप ह्यस्मिन्देवा वसन्ति प्रात-र्यावाणो वामं वस्वित्येतद्ध वै देवानां वामं वसु यदाग्नेयो ऽष्टाकपाल । उप हैनं वामं वसु गच्छति यस्य ह वा एता-मेवंविदाग्नीं कल्पयते[5] । सर्वं पाप्मानं तरति । तरति ब्रह्म-हत्यामप पुनर्मृत्युं जयतीति होवाच प्रजापतिस्तानि ह वा एतानि कूष्माण्डानीत्याचक्षते काजवानीति[6] वामात्यहोमा इति वातीमोक्षा[7] इति वा । स यत्किं चास्मिँल्लोके पापं

१ प्रादात् Be only २ om. Be H.

३ Thus T only : F ददाति स ये के चैतस्यै; B Be H · ददात्यथैतस्यैके-चैतस्यै ; J ददातिमेवचकेचैतस्यै ; Bh. reads *with* स ।

४ Thus T ; B . गोभाजश्चो भवंसमात्ये ; FH : गोभागश्चोभव (or वं ; त्वमात्ये ; J : गोभाजांतश्चिश्चेवाश्चोभवत्याजश्चोमात्य ; Be presents the same reading as T, but चमात्ये instead of चामात्ये ।

५ Thus B Be TH, the other MSS कल्पयति ।

६ Uncertain The above given is the reading of T ; काजपानीति J , काजपानिति F , काजयानीति HB Be : probably Maitr S. II. I. 4 काजर्व is to be compared.

७ Thus TJF . वातिमोक्षा B Be H

कर्म करोति सर्वमात्मस्मान्निर्मुच्यामृतः स्वर्गं लोकमेतीति होवाच प्रजापतिः ॥ ११ ॥ चतुर्थः ॥

अग्नीनाधास्यमानो भवति स उपकल्पयत ऊषांश्च सिकतांश्चाखूत्करं च वल्मीकवपां च सूदं च वराहविहतं च पुष्करपर्णं च शर्कराश्चेत्यष्टौ पार्थिवा। अथ वानस्पत्या अश्वत्थस्योदुम्बरस्य पर्णाश्च शमी च विकङ्कतस्याशनिहतश्च शमीगर्भावरणी[1] मुञ्जकुलायं चित्रियस्याश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः सशाखाः प्रादेशमात्रीरप्रतिशुष्काग्राः षड्ढिरण्यशकलाꣳस्त्रीन्सौवर्णाꣳस्त्रीन्राजतानश्वं पूर्ववाहꣳ रथचक्रं ब्राह्मौदनिकाग्नेरिन्धनꣳ सर्वौषधꣳ रोहितं चर्मानडुहं सर्वाणि यज्ञपात्राणीत्यथास्मा[2] अरणी आहरति यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा। तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेत्यथातो नक्षत्राणामेव मीमाꣳसा। कृत्तिकास्वग्निमादधीत। रोहिण्यामग्निमादधीत। पुनर्वस्वोरग्निमादधीत। पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्रायामित्यथात ऋतूनामेव मीमाꣳसा। वसन्ते ब्राह्मणोऽग्निमादधीत। ग्रीष्मे राजन्यः। शरदि वैश्यो। वर्षासु रथकार इत्यथो खलु यदैवैनꣳ[3] श्रद्धोपनमेदथादधीत। सैवास्यर्द्धिरिति। तदेतदा-

---

1 Thus B Bo HF; शमी° TJ.

2 इति om. JF (H is defect here).

3 Thus BT Ke; यदेवैनꣳ JHF Be, but cp. Sāyaṇa on T. Br. I. 1. 2. 8 (page 13 of the commentary).

चर्मण्युलूखलमुसले निधायावहन्त्यथैतेनैव पात्रेण चतुर उदपात्रानानयति यदि दीक्षिता स्वामी भवति । बहु वा अदीक्षिता पञ्च वा भूयसो वा । स समोदकः संपद्यते । ॥१३॥

तं य एव कश्च[1] कुशलः परीन्धेन[2] श्रपयित्वाभिघार्योद्वासमुद्वासयत्यथैनमायतिगव[3] ऋत्विग्भ्यः प्राङुपसंगच्छन्त एतमेत ऋत्विजो[4] ऽथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंभिन्दन्निवोद्धरति । सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथैतस्यैवौदनस्योपघातं[5] जुहोत्युपतिष्ठते वां प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यान्स्वाहेत्यथैतांश्चतुर आर्षेयानुत्तरतो ऽनुदिशमुपवेश्य तानानुपूर्वमाचमय्य[6] तेभ्य एनं भूमिं स्पृशन्ननुच्छिन्दन्निवोपोहति । त्रिः प्राश्य प्रप्लुष्णन्ति[7] राद्धस्ते ब्रह्मौदन इति । तेभ्यः षाण्डं वत्सतरं ददात्यथैव उत्तरत आसीनो ब्राह्मणः चामकाषं प्राश्नाति । तस्मै यदस्योपकल्पते[8] तद्ददात्यथ

---

१ कश्चन B Be and Keś. ; कश्चित् T ; कश्च the other MSS.

२ Thus HJ Be ; परीधेन B ; परिन्धेन T ; परिधेन F.

३ Thus H Bh., Keś ; चार्यतिमवम् B ; चायतौमव Be J ; चायतिमवे काले F ; चाय्यतिगं T.

४ Thus Be F ; एतदृत्विजो HBJ ; T om एत ।

५ Thus H ; ॰बोदन॰ the other MSS.

६ चानुपूर्व्यम॰ J.

७ Thus H Be T F, Kes. ; प्रप्लुषन्ति the other MSS.

८ Thus F only ; the other MSS. ॰कल्पयते ।

यदाज्यमुच्छिष्यते तेन समिधो ऽभ्यज्यादधाति समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन्हव्या जुहोतन स्वाहा॥ उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम स्वाहा॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य स्वाहेति। गायत्रीभिर्ब्राह्मणस्य त्रिष्टुब्भी राजन्यस्य त्रिघर्म्येग्निमा त्वा त्रिघर्म्यायुर्दा अग्ने हविषो जुषाण इति जगतीभिर्वैश्यस्य जनस्य गोपा अजनिष्ट जागृविरग्निरग्ने मानुषीरीळते विशः सप्त ते अग्ने समिधः सप्त जिह्वा इति। समित्सु वत्सतरीं ददाति। ॥ १४ ॥

अथास्मा अरणी प्रयच्छन्नाह वाचंयमो भविष्यसि सꣳस्थाधि यज्ञे सꣳस्थास्यमिति। स आह ब्राह्मणानामग्रयतान्वा गोपायन्त संभारान्निधत्तेति। तस्य सुभिक्षमग्न्याधेयं भवति। अग्न्याधेयस्य समृद्धिर्यदाहुर्नाग्न्याधेये गां कुर्वीत घोररूपमिति। कुर्वीतैवापि[1] त्वेव न कुर्वीतापि वक्रीरपि कुर्वीतान्वेतस्य भवेत्पुण्या प्रशꣳसेति कात्यो[2]। ऽथास्मा अरणी प्रयच्छति। ते प्रतिगृह्णाति मथ्यौ विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम्। अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगाम्॥ आरोहतं दशतꣳ शक्वरीर्ममर्तेनाग्न आयुषा वर्चसा सह। ज्योग्जीवन्त उत्तरामुत्तराꣳ समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इत्यथैने उपनिगृह्णाञ्जलिष-

---

1 Thus JFH Bb; कुर्वीतैवापि B; F totally corrupt.

2 cp. Dvaidha I, 16.

यतो यो अग्नी रेतसौ गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः । प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इत्यथैनमनृतात्सत्यमुपनयति मानुषाद्दैव्यमुपनयतीदमहमनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति । तं वाचंयमꣳ रात्रिं जागरयन्त आसते । यज्ञेनाꣳ रात्रिमग्निमिन्धते यज्ञैरग्निमिन्धान उभौ लोकौ सनेमहम् । उभयोर्लोकयोर्ऋध्वाति मृत्युं तराम्यहमित्युत्तरेण गार्हपत्यस्यायतनं कल्माषमजं बध्नाति तेनैनमाधास्यमानꣳ संख्यापयति प्रजा अग्ने संवासयाशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि यान्यासन्त्सवितुः सव इति ॥ १५ ॥

पञ्चमः[1] ॥

अथाध्वर्युरपररात्र आहृत्यारणी निष्टपति जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते । अग्निमश्वत्थादधि हव्यवाहꣳ शमीगर्भाज्जनयन्यो मयोभूः ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिमित्यथैतमग्निꣳ हते समुप्य दक्षिणतो ज्वलयन्त आसते ।

---

1 According to Bhavasvāmin, who divides our second praśna in two parts (the second beginning after khaṇḍa 11), the adhyāya number is प्रथमः; the khaṇḍa number according to T, which has the same division, is 4, in B: 16, but the adhyāya number here also is प्रथमः.

ऽथैतान्यग्न्यायतनानि शकृत्पिण्डेन परिलेपयत्यथ तृतीयꣳ संभाराणामादाय गार्हपत्यस्यायतने निवपति यत्पृथिव्या अनामृतꣳ संबभूव त्वे सचा। तदग्निरग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यथोषानुपाधिगच्छति तज्जपति यद्दश्चन्द्रमसि कृष्णं तदपीहेत्यथैनानादधाति दिवस्त्वा वीर्येण पृथिव्यै महिम्ना। अन्तरिक्षस्य पोषेण सर्वपशुमादध इत्यथैनान्संप्रयौति सं वः सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः। सꣳसृष्टः प्राणो अस्तु वः॥ सं या वः प्रियास्तनुवः संप्रिया हृदयानि वः। आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनानभिकल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः। कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः॥ येऽग्नयः समनसो ऽन्तरा द्यावापृथिवी। वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्त्वित्यथातिशिष्टानाꣳ संभाराणामर्धानादाय दक्षिणया द्वारोपनिर्हृत्यान्वाहार्यपचनस्यायतने निवपति यदन्तरिक्षस्यानामृतꣳ संबभूव त्वे सचा। तद्वायुरग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यथोषानुपाधिगच्छति तज्जपति यददश्चन्द्रमसि कृष्णं तदपीहेति। तथादधाति। तथा संप्रयौति। तथा कल्पयत्यथैतेनैव यथेतमेत्यातिशिष्टान्संभारानादाय पूर्वया द्वारोपनिर्हृत्याहवनीयस्यायतने निवपति यद्दिवो ऽनामृतꣳ संबभूव त्वे सचा। तदादित्यो ऽग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यथोषानुपाधिगच्छति तज्जपति यददश्चन्द्रमसि कृष्णं तदपीहेति।

तथादधाति । तथा संप्रयौति । तथा कल्पतइत्यथ गोप्तारꣳ समादिशति । स आह विदृता अग्नयो मा कल्पनान्तरेण संचारीदित्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य[१] गार्हपत्यायतन उपरि संभारेषु मुञ्जकुलायं निदधाति । तस्मिन्प्रतीचीनप्रजननामरणिं[२] निधाय दक्षिणोत्तरारणिमवदधाति । स आह मन्थतेति । यजमानः प्रथमो मन्थति । यजमान उत्तमो मन्थति । जनयति । जाते वरं ददामीति वाचं विसृजते । ऽथैनमुपतिष्ठते ऽजीजनन्नमृतं मर्त्यासो ऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभिसꣳरभन्तामित्यथैनमभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय शतꣳ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय ॥ प्राणे त्वामृतमादधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै इत्यथोद्गातारमाह रथन्तरं ब्रूहीत्यथैनमादधाति । भूर्भुवो घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ ॥ भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्वङ्गिरसामादध्यादादित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानां । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञ । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेना-

१ After आद्रुत्य HFJ ins. जघनेन

२ Instead of अरणिं B has अधरारणिं, Be अधरारणीं, H अरणीं.

दधामीति वैश्यस्य ' ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति ' यथर्षि यथागोत्रं ' गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया तनुवा संभवेत्यथैतꣳ राजतं वृषलाय वाश्रानाय वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणमथैनमुपतिष्ठते अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि। ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः॥ सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीःश्रेयसीर्दधत्। अग्ने सपत्नाꣳ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीति ' ॥ १६ ॥

अथैतमग्निमाददते य एष सते समुप्तो भवति ' तं दक्षिणया द्वारोपनिर्हृत्यान्वाहार्यपचनमादधाति भूर्भुवो वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत्। स्वदितं तोकाय तनयाय पितुं पच॥ अमीषां त्वा देवानां व्रतपते व्रतेनादधामीति ' यथर्षि यथागोत्रं ' गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया तनुवा संभवेत्यथैतꣳ राजतं वृषलाय वाश्रानाय वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणमपि वा गार्हपत्यादेवान्वाहार्यपचनमादधाति ' प्रजापतिरग्निमसृजत सो ऽबिभेत्प्र मा धक्ष्यतीति तस्य त्रेधा महिमानं व्यौहच्छान्त्या अप्रदाहायेत्यथैतमाद्ब्राह्मणादथैनमुपतिष्ठत इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इत्यथैतेनैव यथेतमेत्याभ्यादधातीध्मं प्रणयनीयं ' तं

तथाभ्यादधाति यथा मन्यते ऽर्धोदिते सूर्य आहवनीय[1]
आधीयमानः संपत्स्यत इति । तस्य तथा संपद्यत । उपोपप-
मनीः कल्पयन्त्यश्व एष पूर्ववाट् पड्गृहीतः पुरस्तात्तिष्ठत्यथो-
द्गातारमाह वामदेव्यं ब्रूहीत्यथैनमुपच्छत ओजसे बलाय
त्वोपच्छे वृषणे शुष्मायायुषे वर्चसे । सपत्नतूरसि वृत्रतूः ॥
यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः ।
पुष्टिर्या ते मनुष्येषु पप्रथे[2] तया नो अग्ने जुषमाण एहि ॥
दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः । यत्र-
यत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहीतीथ-
त्यये हरत्यथेयत्यथेयत्यधोऽधः शिरो हरतीति ब्राह्मणमाद-
दान एवैता मात्रा अभिसंपादयेदित्येतदपरमश्वं पूर्वं नयन्ति ।
तमनुमन्त्रयते प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो
अग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि
द्विपदे चतुष्पद इति । विषुवत्युपरमन्ति विक्रमस्व महाँ
असि वेदिषन्मानुषेभ्यस्त्रिषु लोकेषु जागृहीत्यथोपातियन्त्यन्व-
ग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य
पुरुत्रा च रश्मीननु द्यावापृथिवी आततानेत्यथैतेनाश्वेन
प्राचीनमरतः पार्श्वतः संभाराणामाक्रमयति यथाक्षितस्याग्नेर-
ङ्गारा अभ्यववर्तेरन्नित्यथैनं प्रदक्षिणमावर्त्याग्निरभ्युष्योदञ्च-
मुत्सृजति[3] । स एषो ऽध्वर्योर्भवत्यन्यं ब्रह्मणे ददात्यथ

---

१ om. T.　२ पप्रथे B Bo H.　३ आवर्त्य FHJ, आहृत्य C Be T.

सदक्षिणमाहृत्यैनं प्रतिष्ठापयति यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः। तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योनः॥ प्राणं त्वामृत आदधाम्यन्नाद-मन्नाद्याय गोप्तारं गुप्त्या इत्यथोद्गातारमाह इडाद्वारवन्तीयꣳ सैतमिति[1] गायेति सर्वाणि संप्रेष्यति[2] इति गीयमान आहवनीयमादधाति भूर्भुवः सुवरर्कस्तदसौ सूर्यस्तदय-मग्निः संप्रियः पशुभिर्भुवत्। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधे ऽग्निनाग्ने ब्रह्मणा अमीषां त्वा देवानां व्रतपते व्रतेनादधा-मीति यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिरण्य-शल्कमुपास्यति स्वया तनुवा संभवेत्यथैनꣳ राजतं वृषलाय वाज्ञाताय वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणमथैन-मुपतिष्ठत आनशे व्यानशे सर्वमायुर्व्यानश इत्यथैतावग्नी आदधाति सभ्यं चावसथीयं च[3] रथचक्रं प्रवर्तयति संततं[4] गार्हपत्यादाहवनीयात् ॥ १७ ॥

सर्वौषधेन व्याहृतीभिरग्नीऽन्कमथित्वा[5] पञ्चपञ्च नाना-वृक्षीयाः समिधो ऽभ्यज्याभिदधाति समिध्यमानः प्रथमो नु धर्म इत्येताभिः पञ्चभिरायुर्दा अग्ने हविषो जुषाण इत्येता-

---

१ B Bo ins. नाम before गायेति, T: सैतगौतमामगायेत

२ Thus B Bh.; the other MSS. संप्रेष्य

३ BH चाथ  ४ Thus HB Be J: संततं the other MSS.

५ Thus only J, the other MSS. व्याहृतमि॰

सपोद्धृत्याय प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य जघनेन गार्हपत्यं तिष्ठꣳस्तनूभिरुपतिष्ठते ये ते अग्ने शिवे तनुवौ विराट्च स्वराट्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम्। यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध इति सर्वाभिर्गार्हपत्यꣳ सर्वाभिरन्वाहार्यपचनꣳ सर्वाभिराहवनीयमथ घोरास्तनूरनुदिशति यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेत्यंव यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप[1] उपस्पृश्य विराजक्रमैरुपतिष्ठते सर्वं[2] प्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठितामिति गार्हपत्यमथर्व पितुं मे गोपाय। रसमन्नमिहायुषे। अदब्धायो ऽशीततनो। अविषन्नः पितुं कृण्वित्यन्वाहार्यपचनꣳ शꣳस्य पशून्मे गोपाय। द्विपादो ये चतुष्पदः। अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगा इत्याहवनीयꣳ सप्रथ सभां मे गोपाय। ये च सभ्याः सभासदः। तानिन्द्रियावतः कुरु। सर्वमायुरुपासतामिति सभ्यमहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूꣳषि। सा हि श्रीरमृता सतामित्यव-

१ ध्यायेदित्यथाप B Be.

२ Of these mantras J gives only the pratikas.

संवीयमेव गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति । पूर्णाहुतौ वरं ददात्यथैतान्यग्निहोत्रपात्राणि प्रक्षालितान्युत्तरेण गार्हपत्यमुपसादयति कूर्चे वा स्तूनायां वा स्थालीꣳ[1] सस्रुवाꣳ स्रुचमभिहोतनꣳ समिधमित्यथैतामग्निहोत्रीं दक्षिणत उदीचीꣳ स्थापयित्वा ब्राह्मणो[2] दोग्धि । पूर्वौ दुह्यादपरौ दुह्यान्न संमृशेद्योर्दुह्यात्पशुकामस्येत्यधिश्रित्योत्तरमानयत्यथैतदग्निहोत्रमपरेणाहवनीयं पर्यावृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमुपसाद्य तस्मिन्नग्निहोत्रविधिं चेष्टित्वा समिधमुपयत्य प्राङ् हरति । जघनेनाहवनीयमुपसादयति कूर्चे । ऽथैताꣳ समिधं मध्यम आहवनीयस्याभ्यादधाति तूष्णीं । तस्यामादीप्तायां प्रतिमुखं हिरण्यमुत्युच[3] मार्ष्व[3] च मार्ष्वभयमवाप्नोतीति ब्राह्मणं । द्विरङ्गुल्या प्राश्योदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयति । निर्णिज्य स्रुचं निष्प्याद्भिः पूरयित्वोदगुद्दिशति । सप्तर्षीनेव[4] प्रीणातीति ब्राह्मणꣳ । हुत्वोपसमिन्द्धे सप्तत्वंसस्य समिद्धा[5] अपो निनयत्यवभृथस्यैव रूपमकरिति[6] ब्राह्मणम् ॥ १८ ॥

---

१ स्थाल्यस्थालीꣳ H.

२ Thus BT; ब्राह्मणे F; ब्राह्मणोवा Be; ब्रह्मणोवा J, ब्राह्मणोर्थं H.

३ Thus JT and Venk. on Karmant. I. 17, ऊर्ध्वमार्ष्टि Be, ऊर्ध्वमार्ष्टि HB; उन्मार्ष्टि F.

४ Thus B Be HF; सप्तर्षीनेव TJ.

५ Thus corrected. समिध्या अपो B Be HF. समिध्या आपो J. समिध्यापो T.

६ Thus only B Be, cp. Taitt. Br. II. 1. 1. 9. The other MSS. have हुत्वोपनिनयतीति instead of अकरिति।

अथ परिकर्मिणं बर्हिषीवं अधिवृत्याहृतं[1] वा वसुना करोत्यथ श्वोभूते सौम्यापः प्रणीयाग्नेयमष्टाकपालं निर्वप्या-न्वग्नहोतारं व्याचक्षीत । सामिधेनीरनुवक्ष्यन्नग्नहोतारं व्याचक्षीत । अपथित्वावादयति । तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषो ऽग्निर्मूर्धा भुव[2] इति । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमासाद्याग्न्याधेयदक्षिणा दद्यात्ता द्वादशभ्यो ददाति । कामं भूयसीर्ददाति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतमथ तदानीमेव श्वोभूते सौम्यापः प्रणीयैन्द्राग्नमेकादशकपालं निर्वपत्यादित्यं चरुं । एत एव चरुर्भवति । घृते नैदीयसि[3] वाज्यमानयति । अपथित्वा-वादयति । तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्ना-वाज्यभागावथ हविषोरिन्द्राग्नी रोचना दिवः अथहृचमित्यै-न्द्राग्नस्यादितिर्न उरुष्यतु महीमू षु मातरमित्यादित्यस्य । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमासाद्याथैतं चरुं व्युद्धृत्य चत्वार आर्षेयाः प्राश्नन्ति । दिशामेव ज्योतिषि जुहोतीति ब्राह्मणम् । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतम् । ॥१९॥

अथैतद्द्वादशाहं व्रतं चरति । तस्यैतद्व्रतं । नानृतं वदति । न मांसमश्नाति । न स्त्रियमुपैति । नास्य पल्पूलनेन वासः पल्पूलयन्त्यनयपाय्यशूद्रोच्छिष्टी । स्वयं पादौ प्रक्षालयते ।

---

१ अध्याहृतं Bo H.

२ Instead of भुव F: अयमग्निः सहस्रिणः ।

३ Thus BJ; नैदीयसी Bo TF.

त्वाꣳ हवन्त मरुतः स्वर्काः । वर्षिष्ठस्य ककुभि शिश्रियाण-
स्ततो न उग्रो विभजा वसूनीति । तमग्रे गृहीत्वा मैत्रावरुणाय
प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति ।
तꣳ स स्थूरतः प्रतिगृह्णाति मित्रावरुणयोस्त्वा प्रशास्त्रोः
प्रशिषा प्रतिगृह्णामीति दक्षिणोत्तर्यैनमूर्ध्वमुन्मार्ष्ट्यवक्रोऽविधुरो
भूयासमिति । तमादाय संप्रेष्यति होता यक्षदग्निꣳ समिधा
सुषमिधा समिद्धमित्यान्तं पशोः । ॥ ३१ ॥ दशमः ॥

इति तृतीयः प्रश्नः ॥

पशुना यक्ष्यमाणो भवति । स उपकल्पयते पौतुद्रवान्परिधीन्गुल्गुलु[1] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकां या पेलयान्तरा शृङ्गे द्वे रशने द्विगुणां च त्रिगुणां च द्वे वपाश्रपण्यौ विशाखां चाविशाखां च हृदयशूलं कार्ष्मर्यमयान्परिधीनौदुम्बरं मैत्रावरुणदण्डं सुखेन संमितमिध्माबर्हिरिध्मं प्रणयनीयं सविशाखामिडसूनं यवान्यवमतीभ्यः सक्तून्होमाय पृषदाज्याय दधि हिरण्यमित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा षड्ढोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचन्याज्यस्थालीꣳ सस्रुवां बर्हिर्हिरण्यमुदपात्रꣳ ह्रयन्ति तक्षाणꣳ सपरशुमान्वैति[2] यजमानेति पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूप स्पष्टो भवति यत्र वा वेत्स्यन्मन्यते । स यः समे भूम्यै स्वाद्योने रूढो बहुपर्णो बहुशाखो ऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठते ऽत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परो ऽवरैस्तं त्वा जुष वैष्णवं देवयज्याया इत्यथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्त्वित्युध्वांयं बर्हिरनूच्छ्रयत्योषधे त्रायस्वैनमिति । स्वधि-

---

१ Thus Kes, गुगुलु B; गग्गुलु Be H, गुल्गुलु T; वक्रगुलु F.

२ Thus only Be H; the other MSS om. चाच ;

तेना तिर्यञ्चं प्रहरति स्वधिते मैनꣳ हिꣳसीरिति । यः प्रथमः शकलः परापतति तं प्रास्तं निदधाति । तमपरिभिन्दन्नवृश्चन् वृश्चति । प्राञ्चं वोदञ्चं वा प्रपातमनुमन्त्रयते दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभवेत्यथाव्रश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति वनस्पते शतवल्शो विरोह स्वाहेति । सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशते । ऽन्वयꣳ शाखाः प्रसूदयति यं त्वायꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति । पञ्चारत्निं तक्ष्णे वृश्चेदित्येव ब्राह्मणवतामवमस्तं परिष्वक्षपरमं[1] प्रादेशावमं चषालस्य काले परिवासयत्यच्छिन्नो रायः सुवीर इति । यत्परं भवति तस्य चतुरङ्गुलं चषालाय प्रच्छेदयति । तं चतुरश्रिं वाष्टाश्रिं वा तष्ट्वा वा हरत्या[2] वा हारयत्योप्य निस्तिष्ठत्यवतक्षणानामेव स्वरुं कुरुते । ऽथास्यैषा पूर्वेद्युरेव पाशुबन्धिकी वेदिर्विमिता भवति दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्ची । तां परिस्तीर्य स्तम्बयजुर्हरति ॥ १ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । स्फ्ययजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धृतादाग्नीध्रश्चिन्हरति । यदाग्नीध्रश्चिन्हरत्यथ याचति स्फ्यमुदपात्रं बर्हिः

१ Thus H Be T; परिवंशमपर॰ B; परिष्वंशंपर॰ F.

२ Thus Be H and the Aptoryāma-Sūtra; हत्वावारयत्यवाचारयत्युप्य T; हत्वावारयत्यावाचारयत्योप्य B; हत्वावरत्यावावारयेनोप्य F.

मध्यमाभिर्वैतसमाहार्याहेति यजमानेत्युत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धृत्यावोक्ष्य शम्यया चात्वालं परिमिमीते। वित्तायनी मे ऽसीति पुरस्तादुदीचीनकुम्बयान्तरेण स्फ्येनोल्लिखति। तिक्तायनी मे ऽसीति दक्षिणतः प्राचीनकुम्बयान्तरेण स्फ्येनोल्लिखत्यवतान्मा नाथितमिति पश्चादुदीचीनकुम्बयान्तरेण स्फ्येनोल्लिखत्यवतान्मा व्यथितमित्युत्तरतः प्राचीनकुम्बयान्तरेण स्फ्येनोल्लिखत्यथ चात्वाले बर्हिर्निधाय तस्मिन्स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो ऽस्यां पृथिव्यामसीत्यायुषा नाम्नेहीति। तस्योत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामसीत्यायुषा नाम्नेहीति। तस्योत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसीत्यायुषा नाम्नेहीति। तस्योत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। तूष्णीं चतुर्थꣳ हरति सह बर्हिषाध्वर्युः स्फ्येन चात्वालात्पुरीषमुद्धृत्याग्नीध्रमाहाग्नीदितस्त्विर्वपेति। ततस्त्वराग्नीध्रो हरति। यदाग्नीध्रस्त्वर्वपत्यथाध्वर्युरुत्तरवेद्यै पुरीषꣳ सम्प्रयौति सिꣳहीरसि महिषीरसीति। प्रथयत्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति। स्फ्येन सꣳहन्ति ध्रुवासीत्ययंनामक्षिरवोचति देवेभ्यः शुन्धस्वेति। देवेभ्यः शुम्भस्वेति सिकताभिरनुप्रकिरति। तां प्राद्विमात्रीं

चतुरश्रां[१] मित्वाय रज्ज्वा परिमिमीत। उत्तरस्याभिमुखाग्रा- येनां प्रतिच्छाद्याभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनो- र्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरसीति। तया यूपावटं परिलिखति यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धं परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदिमं यूपावटं खनोपरसंमितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमति- खनतादिति। तꣳ स खनति वा खानयति वा। यावदेवा- चाध्वर्युरेति तावदेव प्रतिप्रस्थाताभ्यादधातीध्मं प्रणयनीय- मुपोपयमनीः कल्पयन्ति[२] चात्वालाद्दात्रेणेन्द्रघोषवतीः प्रोक्षणी- रध्वर्युरादत्ते। परिकर्मिणे पञ्चगृहीतमाज्यं प्रयच्छति। ब्रह्मापि संभारा भवन्त्यथ संप्रैषमाहाग्नये प्रणीयमानायानुब्रूह्यग्नीदेक- स्फ्ययानुसंधेहीति। त्रिरुक्तायामुत्तिष्ठन्ति। होतुर्वश्च यन्त्युत्तरेण वेदिं प्रतिपद्यन्ते। धारयन्त्येतमग्निमथाध्वर्युरिन्द्रघोषवतीभिः प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति। ॥ २ ॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति पुरस्तान्मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः। प्रचेतास्त्वा रुद्रैः पश्चात्पा- त्विति पश्चाद्विश्वकर्मा त्वादित्यैरुत्तरतः पात्वित्युत्तरतो। ऽथ यत्प्रोक्षणीनामुच्छिष्यते तद्दक्षिणत उत्तरवेद्यै निनयति। यदेव

१ Thus B T; चतुरश्रं the other MSS.

२ Thus B Be T F; कल्पयति H.

तत्र क्रूरं तत्तेन शमयतीति आज्यस्थालीमथैनाꣳ हिरण्यगर्भाग्न्युपया पञ्चगृहीतेन व्याघारयति । सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणेऽꣳसे । सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्याꣳ श्रोण्याꣳ । सिꣳहीरसि रायस्पोषवनिः स्वाहेति दक्षिणस्याꣳ श्रोण्याꣳ । सिꣳहीरस्यादित्यवनिः स्वाहेत्युत्तरेऽꣳसे । सिꣳहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्ये । ऽथ भूतेभ्यस्त्वेति स्रुचमुद्गृह्णात्यथ पौतुद्रवान्परिधीन्परिदधाति । विश्वायुरसि पृथिवीं दृꣳहेति मध्यमं । ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणमच्युतक्षिदसि दिवं दृꣳहेत्युत्तरमथाग्निमिष्टाश्वभारान्निवपति गुल्गुलु[1] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकामग्नेर्भस्मास्यग्नेः पुरीषमसीत्यथैनामꣳस्रावेणाभिघारयत्यथ[2] प्रदक्षिणमावृत्योखां प्रतिष्ठापयति यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु। दीर्घमायुर्यजमानाय कृण्वन्नमृतेन जरितारमङ्ग्धीत्यथैनं विश्वस्याकूतिपाशं कल्पाध्वराकूतिभिरभिजुहोत्यग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रभूतायज्ञं प्रप यज्ञपतिं तिर स्वाहा॥ वायुर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रभूतायज्ञं प्रप यज्ञपतिं तिर स्वाहा॥ सूर्यो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रभूतायज्ञं प्रप यज्ञपतिं तिर स्वाहा॥ यज्ञो यज्ञं

१ Thus F: गुग्गुलु B Be H; गुस्गुलु T (Grantha!).

२ ॰भिजुहोत्यथ Be F.

खाविशन्ति पूर्वं एवाध्वर्युरपरो यजमानो ऽपरा पत्न्येव अष्टाश्रं चषालं यूपस्यापनह्यन्ति देवस्त्वा सविता मध्वानक्त्वित्यन्तरतश्च बाह्यतश्च। स्वभ्यक्तं कृत्वा चषालं प्रतिमुञ्चति सुपिप्पला ओषधी-स्कृधीत्यथ स्रुवेणाग्निष्ठामश्रिमभिघारयन्नाह यूपायाज्य-मानायानुब्रूहीत्यन्तमन्ततामन्तमेव यजमानं तेजसानक्ति। नोप-रमनक्ति। पत्न्युपरमनक्ति। सर्वतः परिमृशत्यपरिवर्गमेवास्मिन्तेजो दधातीति। प्राञ्चमुच्छ्रयन्नाहोच्छ्रीयमाणायानुब्रूहीत्युच्छ्रयत्यु-द्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳहेत्यथैनं वैष्णवी-भ्यामृग्भ्यां कल्पयति ते ते धामानि विष्णोः कर्माणि पश्यतेति द्वाभ्याꣳ। स यथाग्निष्ठामश्रिमाहवनीयेन संपादयति तथैवास्य चषालं परेक्षयति तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततमित्यथैनं प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति। मैत्रा-वरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यन्यूनमनतिरिक्तं परिमृश्योदपात्रमुपनिनीया-थैतां त्रिगुणाꣳ रशनां त्रिः संभुज्य मध्यमेन गुणेन नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति। त्रिः प्रदक्षिणं परि-व्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या इत्युपान्ते व्यतिषजत्यान्तं प्रवेष्ट-यत्यभिमति स्वधितिमवयत्यथोत्तरेणाग्निष्ठामश्रिं मध्यमे गुणे स्वरुमवगूहत्यन्तरिक्षस्य त्वा सानाववगूहामीति। स्वरुवन्तं यूप-सम्मृजति। ॥ ४ ॥ प्रथमः ॥

अथैतं पशुं पल्पूलितमन्तरेण चात्वालोत्करौ प्रपाद्याग्रेण यूपं पुरस्तात्प्रत्यञ्चमुपस्थापयति । तमिषे त्वेति बर्हिषी आदायोपाकरोत्युपवीरस्युपो देवान्दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वं प्रजापतेर्जायमाना[1] इमं पशुं पशुपते ते अद्येन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति । यद्देवत्यो वा भवति । प्रज्ञाते बर्हिषी निधायाधिमन्थनं शकलं[2] निदधात्यग्नेर्जनित्रमसीति । वृषणावन्वञ्चौ वृषणौ स्थ इत्यथारणी आदत्त उर्वश्यस्यायुरसि पुरूरवा इत्यथैने आज्यस्थाल्यां समनक्ति घृतेनाक्ते वृषणं दधाथामित्यथ प्रजातीर्वाचयति गायत्रं छन्दोऽनु प्रजायस्व त्रैष्टुभं छन्दोऽनु प्रजायस्व जागतं छन्दोऽनु प्रजायस्वेत्यथाहाग्नये मथ्यमानायानुब्रूहीति । जात आह जातायानुब्रूहीति । प्रहरत्याह प्रह्रियमाणायानुब्रूहीति । प्रहरति भवतं नः समनसाविति । प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति । तयाक्ष्णया पशुमभिदधाति दक्षिणमर्धशीर्षमृतस्य त्वा देवहविः पाशेनारभ इति । वित्रणायै च निगुणायै चान्तौ संदधाति धर्षा मानुषानिति । नियुनक्त्यथैनमद्भिः प्रोक्षत्यग्नीषोमाभ्यामिन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति । यद्देवत्यो वा भवति । पाययत्यपां पेरुरसीति ।

---

१ These mantras are given sakalapāṭhena only in H Bo.

२ Thus BT Keś. [illegible] H F Bo.

प्रजा विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माꣳ अवन्तु पयसा घृतेनेति । संज्ञप्तं प्राज्ञुं जुहोति संज्ञप्ताहुतिं यत्पशुर्मायुमकृतेत्यथाभ्येति[1] शमितार उपेतनेति । पाशात्पशुं प्रमुच्यमानमनुमन्त्रयतेऽदितिः पाशं[2] प्रमुमोक्त्वेतमित्यथ विपाशयोपगृह्येमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमित्यथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्याथैनामादित्यमुदीक्षयति नमस्त आतानेत्यथैनामन्तरेण चात्वालोत्करावुदक्रुपनिष्क्रम्य[3] प्राचीमुदानयन्वाचयत्यनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्यागतामध्वर्युरप्सु वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति । आनुपूर्व्यं[4] पशोः प्राणानाप्याययति । वाक्त आप्यायतामिति वाचं । प्राणस्त आप्यायतामिति प्राणं । चक्षुस्त आप्यायतामिति चक्षुः । श्रोत्रं त आप्यायतामिति श्रोत्रमेतानेव पुनः संमृशति या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्त एतेन शुन्धतामिति । नाभिस्त आप्यायतामिति नाभिं । पायुस्त आप्यायतामिति पायुꣳ । संप्रमृश्य पदः प्रक्षालयति शुद्धा-

१ Thus TH Be; चर्भेति BF.

२ T gives the first two pādas of this stanza (TS. III. 1. 4. 1), perhaps rightly.

३ Thus B Keś.; ०निष्क्रम्य Be TH; ०निष्क्रम्ये F.

४ ०पूर्वं THF Keś

बर्हिषः प्रस्तरः प्रमोषधीभ्यः शं पृथिव्या इति । प्रमहोभ्या-मित्यतिसृष्टा दक्षिणतो ऽनुष्टुभं निनयति । यथापि पत्नीमुन्नानं पशुं पर्यस्यन्ति[1] । तस्य दक्षिणस्य पार्श्वस्य विष्टमनु प्राचीनाग्रं बर्हिर्निदधात्योषधे त्रायस्वैनमिति । स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति । छिनत्ति बर्हिषि त्वचं छायायै-तस्यैव बर्हिषो ऽणिमत्युचते । स्वधितिमुभयतो लोहितेनाक्तां हिथं निरस्यति रक्षसां भागो ऽसीदमहꣳ रक्षो ऽधमं तमो नयामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामीत्यथाप उपस्पृश्य वरीय आच्छाचेषे लेति वपामुत्खि-दति । तया वपाश्रपणी प्रोर्णोति घृतेन द्यावापृथिवी प्रोर्णु-यामित्यविधायाथोपहृत्याधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथैनां प्रदक्षिणमावृत्याग्निरभ्युद्ध्य[2] शामित्रे प्रतितपत्यथोल्मुक-प्रथमाः प्रतिपद्यन्ते ॥ ६ ॥

अन्वगध्वर्युर्वपयाच वपाश्रपणी पुनरन्वारभते यजमान । ऐत्युर्वन्तरिक्षमन्विहीत्यथाहवनीयस्यान्तमेष्वङ्गारेषु वपायै प्रति-तप्यमानायै बर्हिषो ऽग्रनुपास्यति वायो वीहि स्तोकानामि-त्यथैनामन्तरेण यूपं चाहवनीयं चोपातिहृत्य तां दक्षिणत उदङ्मुखः प्रतिप्रस्थाता श्रपयत्यथैनाꣳ स्रुवाहुत्याभिजुहोति त्वाम् ते दधिरे हव्यवाहमित्यथाह स्तोकेभ्यो ऽनुब्रूहीति । परिच्छिताम् स्तोकीयासु शृतायां वपायां शुक्रपक्षतावादाया-

---

१ ॰स्यति Be F.

२ Thus all, except Be which has ॰मावृत्या॰ : are we to correct प्रदक्षिणमावर्त्य ?

यन्तौ ऽथ संप्रैषमाहाग्नीदुत्तरबर्हिरुपसादय प्रतिप्रस्थातः पशौ संवदस्वेत्यथैष आग्नीध्रः प्लक्षशाखायामिडसूनमुपगूहति । तदुत्तरबर्हिर्भवत्यथ प्रतिप्रस्थाता पृषदाज्यं विहृत्य शुक्लाᳪ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य पृच्छति शृतᳪ हवी३ः[1] शमितरिति । शमितैष उत्तरतो हृदयशूलं धारयᳪस्तिष्ठति । स शृतमिति प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याहाथ शमितुर्हृदयशूलमादाय तेन हृदयमुपहत्य तᳪ शमित्रे संप्रदाय पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहेति । विष्वः कृत्वा हरतेत्युक्त्वैतेनैव यथेतमेत्य यत्रस्तूपस्तृणीते जुहूपभृतोरिडाधाने यस्मिᳪश्च वपाहोमं पशौ व्यभ्यवत्याहरन्ति तं पशुमन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं चापातिहृत्य तं[2] दक्षिणतः पशुहोत्रामादयत्येतेनैव यूराहरन्त्येतेनैवेडसूनमथ प्लक्षशाखायाᳪ हृदयं निधाय स्वधितिना तस्याग्रे ऽवद्यन्नाह ॥ ८ ॥

मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति । हृदयस्यैवाग्रे द्विरवद्यत्यथ जिह्वाया अथ वक्षसो ऽथ तनिम्नो ऽथ वृक्कयोरथ सव्यस्य दोष्णो ऽथ दक्षिणस्य पार्श्वस्याथ सव्यस्याथ दक्षिणायै श्रोणेरध्युद्धौ । त्रैधं गुदं कृत्वाणिमत्स्विष्टकृते निदधाति

१ With pluti sign only Be.

२ H om.; Bo sec. m. del.

स्वविमदुपयड्भ्यो मध्यं[1] द्वैधं कृत्वा जुह्वामवद्यत्यथ वृक्कमेदो यूषन्नवधाय तेन जुहूं प्रोर्णोति । यूष्णोपसिञ्चत्यभिघारयत्यथोपभृति त्रिरङ्कते सर्वेषां अङ्गानाꣳ सकृत्सकृत्समवद्यति । सकृद्दक्षिणस्य दोष्णः पिशितं प्रच्छिद्यावद्धाति सकृत्सव्यायै श्रोणेरणिमद्धत्याथ वृक्कमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णोति । यूष्णोपसिञ्चति[2] । द्विरभिघारयत्यथ हृदयं जिह्वां वक्षस्तनिम मतस्नौ[3] वनिष्ठुमितीडापात्र्याꣳ[4] समवधाय यूष्णोपसिञ्चत्यभिघारयत्यथ[5] कꣳसे वा चमसे वा वसाहोमं गृह्णाति । यूष्णोपसिञ्चत्यभिघारयत्यथ पशोरवदानानि संमृशत्यैन्द्रः प्राणो अङ्गेअङ्गे निदेध्यदैन्द्रो ऽपानो अङ्गेअङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ । देवत्रा यन्तमवसे सखायो ऽनु त्वा माता पितरो मदन्त्वित्यथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्भतः श्रोरस्यग्निस्था श्रोणात्वापः समरिणन्वातस्य त्वा भ्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्या इति । संस्तष्य पशोः प्रतीचीं जाघनीꣳ हरन्ति । प्रतिपरिहरन्ति पशुमथ जुहूपभृतावादाय आग्नेन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीत्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येति । प्रतिप्रस्थातैव उत्तरतो

---

१ Thus Be H T Kes , मध्यमं BF.

२ अथ ins. Be FH.

३ Thus Be H F Kes. ( sec. m. ) ; मतस्नू BT.

४ BH Be ; इति पात्र्याꣳ ; F इतिपात्र्याꣳ ; T totally corrupt.

५ अथ after •सिञ्चति ins. Be F.

वपाहोमं धारयꣳस्तिष्ठति[१] । यो ऽर्धर्चे आज्यस्य वपाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहेति । वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वपाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः स्वाहेत्यथ प्रदक्षिणमावृत्य पृषदाज्यात् स्रुवेणोपघ्नन्नाह वनस्पतये ऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ समवपमान आहाग्नये स्विष्टकृते ऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा होम इडामुपोद्यच्छन्ते मेदस । उपहूतायामिडायामग्नीध आदधाति षडवत्तमर्धवमिष्ठमथार्धवमिष्ठं । मेदस्वत्याश्नन्ति । मार्जयन्ते । ऽथाह ब्रह्मणे वसः परिहरेति । तद्ब्रह्मा प्रतिगृह्णाति ॥ ९ ॥

वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहीत्यथ संप्रेषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहरन्त्येताङ्गारानाग्नीध्रादौपयजानङ्गाराꣳस्तानग्रेण होतारं निवपत्युपसीदत्युपयष्टा गुदस्तृतीयेनाथाध्वर्युः पृषदाज्यं विहृत्य[२] जुह्वाꣳ

१ Thus B Bo; धारयं तिष्ठति H; the other MSS. corrupt.

२ Thus H T; विहृत्य B Bo; विपरत्य F.

क्रमणीयात्याक्रम्याथ देवेभ्यः प्रेष्येति। वषट्कृते जुहोति प्रेष्य प्रेष्येत्येवमेवोपहत्योपयजति गुदस्य प्रच्छेदँ समुद्रं गच्छ स्वाहेत्येतैरेकादशभिरग्निं वैश्वानरं गच्छ स्वाहेति सर्वमन्ततो ऽनुप्रहरत्यथ बर्हिषि हस्तौ निमार्ष्ट्यद्भ्य ओषधीभ्यो मनो मे हार्दि यच्छेत्यथास्य धूममन्वीक्षते तनूं त्वचं पुत्रं नप्तारमशीयेत्येकादशानूयाजानिष्टोदञ्चत्याक्रम्य जुह्वाँ स्वरुमवधाय पुरस्तात्प्रत्यङ् तिष्ठञ्जुहोति दिवं ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहेत्यथ यथायतनँ स्रुचौ सादयित्वा वाजवतीभ्याँ स्रुचौ व्यूहति। अंशुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[1] विमुच्य जाघन्या पत्नीः संयाजयन्त्याज्यस्यैव सोमं च त्वष्टारं च यजत्युत्तानायै जाघन्यै देवानां पत्नीर्यजति। नीच्या[2] अग्निं[2] गृहपतिमुत्तानायै जाघन्यै होता इडामवद्यति। नीच्या[2] अग्नीधे[2] षडवत्तं। प्राश्नीतो। मार्जयेते। अथ स्रुचि चतुर्गृहीतं गृहीत्वापवर्गैः पर्याहृत्याप्याहार्यपचने प्रायश्चित्तं कृत्वा[3] न पत्नीकरणहोमेन चरत्यथ प्राकृत्य ध्रुवामाप्याय्य पौर्णं समिष्टयजूँषि[3] जुहोति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति। स्रुवेणैव द्वितीयमेष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहेति[4]। जुह्वा

---

१ जुह्वौ Be H.

२ Thus only Be; the other MSS. have नीचाग्निं and नीचाग्नीधे।

३ जुहोति B Be.

४ T ins. पञ्चपञ्चिकादि।

तृतीयं देवा गातुविदो गातुं वित्त्वा गातुमित। मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युदूहति सुषमेध याचति इष्यमुदपात्रꣳ हृदयशूल-मित्येतत्समादायाहैहि यजमानेत्यथ यजमानो ऽनूची पत्न्यन्त-रेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्याग्रेण यूपꣳ स्फ्येनोद्धत्यावोक्ष्य शुष्कस्य चार्द्रस्य च सन्धौ हृदयशूलमुद्वासयति ॥ १० ॥

शुगसि तमभिशोच योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्चेत्यथा-प्रतीचमायन्ति वरुणस्यान्तर्हित्यै प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्येत्याहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथौपयजिके[1] ऽग्नौ बर्हिरुपोषति यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि। इहैव सन्निरवदये तदेतत्त-दग्ने अनृणो भवामीत्यथाञ्जलिनोपस्तीर्णाभिघारितान्सक्तून्प्रदाव्ये जुहोति विश्वलोप विश्वदावस्य त्वासञ्जुहोमि स्वाहेति। हस्तौ प्रध्वꣳसयते ऽघादेको ऽकृतादेकः समनादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति द्वितीयं जुहोति यान्यपा-मित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि। इहैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एतत्स्वाहेति

१ Corrected acc. to Bh.; °बोपयजिके MSS.

इमौ प्रध्वꣳसयते ऽघादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति तृतीयं जुहोत्यनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके अनृणाः स्याम । ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आक्षीयेम स्वाहेति इमौ प्रध्वꣳसयते ऽघादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमित्यथ देवता उपतिष्ठते ऽयं नो नभसा पुर इत्यग्निꣳ स त्वं नो नभसस्पत इति वायुं देव सꣳस्फानेत्यादित्यमथ यूपमुपतिष्ठत आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेत्यथ पूर्वाग्निꣳ शकले समारोपयत्ययं ते योनिर्ऋत्विय इति तं मथ्यमे ऽग्नावपिसृजत्याजुह्वान उद्बुध्यस्वाग्न इति द्वाभ्यामथ[1] मध्यममग्निमुपसमाधाय मध्यमे ऽग्नौ पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति पूर्णाहुतौ वरं ददाति धेनुवरं[2] वानडुद्वरं[3] वा दद्यादिति ह स्माह बौधायनः संतिष्ठते पशुबन्धः संतिष्ठते पशुबन्धः ॥ ११ ॥ तृतीयः ॥

॥ इति चतुर्थः प्रश्नः ॥

---

१ अथ om B.

२ Thus BF; धेनू॰ H Be: धेनुं T.

३ Thus HTF; वानडुहंवरं B; वानडुद्दरं Be; comp. VII. 4 s f.

वैश्वदेवेन हविषा यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां । तस्य प्रयोग एवैक आज्यार्द्रनवनं चापूर्यमाण-पक्षे पुण्याहे प्रयुङ्क्ते इति । स उपकल्पयते वेदोऽश्ववालीं लोहितायसं च क्षुरं चतुष्टयानि पुरोडाशकपालानि सप्त-स्वरवाणीकावन्ति मेक्षणानि द्वयं पयः प्रयद्वाभ्याय च[3] दधि हविरातञ्चनाय च त्रेधा बर्हिः संनद्धं तदेकधा पुनः संनह्य[2] प्रस्तरं प्रस्तरमित्यथोपवसथीये ऽहन्दिहविषमारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुम् । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथास्यैतद्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति । वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वा प्रातर्हुते ऽग्निहोत्रे पुराणां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानु-द्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्यां स्तीर्त्वापः प्रणीयाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति । हविष्कृता वाचं विसृजते । समानं कर्माधिवपनाद्ध्युप्य दक्षिणार्धे गार्ह-पत्यस्याष्टौ कपालान्युपदधात्यथोत्तरतस्तिरः पवित्रमप आनीय सौम्याय चरवे ऽधिश्रयत्यथोत्तरतः सावित्राय द्वादशकपाला-

१ T F om.

२ J recommences with बं प्रस्तरमयं ।

३ चमि Be J F H.

प्रदक्षिणमावृत्य प्रत्यङ्ङाक्रम्य स्रुचौ च स्रुवञ्च संमृष्टौ पृषदाज्यधान्यौ । पत्नीं संनह्यत्याज्यं च । इध्माबर्हिषी चाज्ये च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवदेवाध्वर्युरुत्तरस्यां वेद्यां स्तृणीते । दार्शपौर्णमासिकानि प्रतिप्रस्थाता दक्षिणस्याम् । ॥ ५ ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठत[2] । इध्मौ प्रोक्षतो । वेदी प्रोक्षतो । बर्हिषी प्रोक्षतो । बर्हिषी आसाद्य प्रोक्षणीशेषं निनीय पुरस्तात्प्रस्तरौ गृह्णीतः । पञ्चविधमेवाध्वर्युरुत्तरस्यां वेद्यां बर्हिः स्तृणाति । त्रिविधं प्रतिप्रस्थाता दक्षिणस्यामथ प्रस्तरपाणी प्राञ्चावभिद्रुत्य कार्ष्मर्यमयान्परिधीन्परिधत्त । ऊर्ध्वाः समिध आधत्तो । विधृतीश्चिरस्थाः[3] सादयतो । विधृतीषु प्रस्तरौ । प्रस्तरयोर्जुह्वौ । बर्हिषोरितरा[4] । एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतो [5]दक्षिणत एवाध्वर्युरुत्तरतः प्रतिप्रस्थातानुपूर्वं[6] हवींष्युदासयत । आग्नेयमष्टौ न्येवाध्वर्युरुदासयति प्रसिद्धमैन्द्राग्नमाम्नावतीं प्रतिप्रस्थाता कंसे वा चमसे

---

1 Thus J only; the other MSS. mostly °ष्टं ।

2 उपोत्तिष्ठत F.

3 Corrected. विधृतीश्चिरस्थाः T; विधृत्यश्चिरस्थाः B; विधृत्यतिरश्च्यः Be; विधृत्यश्चिरस्थः H; विधृत्याश्चिरस्थाः F; विधृत्यश्चिरः J.

4 Thus B Be F T; इतरे H J.

5 The following words: दक्षिणत .... प्रतिप्रस्थाता are found only in B, but comp. S'rautapadārtha page 118.

6 चानुपूर्वं H Be; चानुपूर्वं J; चनुपूर्वं F; °नुपूर्वं B.

नीयात्याक्रम्याश्राव्याह देवान्यजेति । वषट्कृते जुहोति यज यजेति नवानूयाजानिष्ट्वोद्ग्राहवत्याक्रम्य यथायतनꣳ स्रुचः[1] सादयित्वा वाजवतीभ्याꣳ स्रुचौ[1] व्यूहतः । शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[2] विमुच्य । तथैव कृष्णौ वा समस्तौ वासाञ्चलिनौ यावतः । समानौ वाजिनयोर्यथाध्वर्युरेव प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोत्येवं प्रतिप्रस्थाता दार्शपौर्णमासिकं दक्षिणे । ऽथ पूर्णपात्रविष्णुक्रमेष्वरित्वा न विसृजते व्रतमथ यावत्याज्यस्थालीꣳ सस्रुवाꣳ स्रुचं बर्हिः प्रतिवसनीये वाससी वारुणं निष्कासं तुषानित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यन्तरेण[3] चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तद्यन्ति । प्रसिद्धो ऽवभृथः । साम चैव नाह देवीराप एष वो गर्भ इति चाथाप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै । प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्येत्याहवनीये[4] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथ

---

१ Thus Be H; the dual both times in TFJ; B. has the first time the plural, the second time the dual.

२ Thus B Be HJ; स्रुचो TF.

३ Thus passage चाहेहि ... नूची पत्नी found thus only in B Be TH; J. has only चाहेहि यजमानेति; F omits the words altogether.

४ Thus HF; °स्येत्याहवनीये BJ.

विसृजते अतमेव पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य श्येन्या शलल्या लोहितायसस्य च क्षुरेण शीर्षाणि च वर्तयते परि च वपते यद्धर्मः पर्यवर्तयदन्तान्पृथिव्या दिवः । अग्निरीशान ओजसा वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये । तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते वरुणप्रघासहवीꣳषि परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशास्ते ॥ ६ ॥ द्वितीयः ॥

अथातश्चतुर्षु मासेषु साकमेधहविर्भिर्यक्ष्यमाणो भवति स उपकल्पयते श्येनीꣳ शललीं लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रश्चरुस्थालीस्तावन्ति मेक्षणानि पृथद्राव्याय दध्येव पौर्णमास्या उपवसथे ऽग्नये ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता सा प्रसिद्धेष्टिः संतिष्ठते ऽथ मध्यंदिने मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति सा प्रसिद्धेष्टिः संतिष्ठते ऽथास्यैतदृषभंवत्सो गृहमेधिभ्यो वत्सा अपाकृता भवन्त्यथ सायꣳ हुते ऽग्निहोत्रे सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंभिन्दन्नुद्धरति सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयान्तर्वेद्यासादयत्यथाग्नये सोमायेत्याज्यभागाभ्यां

गार्हपत्यं परिस्तृणाति । तस्योत्तरेणैकस्मिन् कटे समाहृत्य त्याग्नि-पूर्वार्धे ब्राह्मणाभ्यसने इध्मान् स्फ्यमुदकुम्भौ पात्राण्युपसादयति यज्ञोपवीतं कृत्वोत्तरेण[1] गार्हपत्यमुपविश्य पवित्रवत्याग्निहोत्र-हवण्या निर्वपति । *देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां* पूष्णो हस्ताभ्याम् सोमाय पितृमते जुष्टं निर्वपामीति चतुरो मुष्टीन्नीवाराणां निर्वपत्येतामेव प्रतिपदं कृत्वा पितृभ्यो बर्हिषद्भ्यो जुष्टं निर्वपामीति चतुरो यवानामेतामेव प्रतिपदं कृत्वा पितृभ्यो ऽग्निष्वात्तेभ्यो जुष्टं निर्वपामीति चतुर एव यवानां । तेषां व्रीहिष्वेव परिष्कृतमुदादधत्युपोषन्ते यवान्परिष्कृता वाचं विसृजते । समानं कर्माधिवपनादुद्धृत्य दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपदधात्येतान्यवानुदूखले परिघ्नन्ति गार्हपत्य एक-कपालमधिश्रित्य भर्जयन्ति[2] । सकृदुपा धानाः कृत्वा तेषामर्धा धाना भवन्त्यथेतरान्सक्तून्कुर्वन्ति । कृतानि पिष्टानि संयुत्य संयुत्याधिश्रयन्ति[3] पुरोडाशं षट्कपालमथोत्तरतो भस्ममिश्रा-नङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमा-नीय तिरः पवित्रं धाना आवपत्यथैनदभितान्यार्थे दुग्धमर्धपात्रं चापयति । तस्मिंस्तिरः पवित्रं सक्तूनोप्यैकर्षेणुशलाकयोप-मन्थति । दक्षिणोपमन्थत्यनारभ्योपमन्थतीति ब्राह्मणमथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रयति । चरुं पुरोडाशस्य

१ अथर्वेण instead of उत्तरेण T.

२ om. Bo JF.

३ Before चरिश्वत्ति H Be JF have चरु ।

याचयित्वाभिवाद्यापैनायेभ्यो[1] ऽतिनयति । दक्षिणत एव स्व आग्निध्रः कृतो भवति । तदेनां चतुरश्रां[2] वेदिमाखिनत्येव न खनति । तस्यै मध्यतो ऽन्वाहार्यपचनमुपसमाधाय स्तम्बयजुर्हरति ॥ ११ ॥

इदमेव प्रविष्टं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्यायतासु प्रोक्षणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य स्रुवं च स्रुचश्च संमार्ष्ट्याज्येनोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रविष्टं पञ्चगृहीतानि वा चतुर्गृहीतानि वाज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्समूलं प्रस्तरं गृह्णाति तूष्णीमथ प्राचीनावीतं कृत्वा त्रिरपसलैः परिस्तृणन्पर्येति । संतरामेवाग्रे ऽथ वितरामथ वितरामथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपर्येत्यथ[3] प्रस्तरपाणिर्द्वौ परिधी परिदधाति मध्यमं चैव दक्षिणं चोर्ध्वे समिधावादधाति । विधृती तिरश्ची सादयति । विधृत्योः समूलं प्रस्तरं न्यस्यति तूष्णीं ।

---

१ After याचयित्वा Bo TJH have श्रपयित्वा ।

२ Thus T; ०श्रां the other MSS.

३ प्रति om. BF.

प्रस्तरे जुह्वं बर्हिषीतरे। एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्वꣳ[1] हवीꣳष्युद्वासयत्युपस्तीर्णाभिघारितं पुरोडाशमभिघार्य[2] धानाः करम्भमिति। तेषामेकैकमनूचीनान्युद्वाहरन्ति। दक्षिणतः पुरोडाशमासादयत्युत्तरतो धाना। उत्तरतः करम्भं। दक्षिणत एतत्परिश्रयणं कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशाꣳ स्यमिति निदधात्युत्तरत उदकुम्भौ। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतोऽध्वर्युश्चाग्नीध्रश्च। ॥ १२ ॥

अथेध्मात्समिधमाददान आहाग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्यभ्यादधातीमाꣳ सकृद्वा त्रिर्वा। परि समिधꣳ शिमिष्ठ। वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति। संमृष्टे स्रुग्भ्यामुत्तरमाघारमꣳस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य[3] जुह्वा ध्रुवाꣳ समज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते[4] ऽयाश्रावयत्यो श्रावयास्तु श्रौषडग्निर्देवो होता देवान्पितॄन्यक्षद्देत्येतावान्प्रवरः। सीदति होता। प्रसवमाकाङ्क्षति। प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति। वषट्कृते जुहोति। यज यजेत्यपबर्हिषश्चतुरः प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावे-

---

१ ॰पूर्व्यꣳ all.

२ After पुरोडाशं B Be HF ins. उद्वासयति।

३ Thus Be HF; स्रुच उद॰ J; स्रुचावुद॰ T; स्रुचा उद॰ B.

४ BH ins. प्रविश्यꣳ होतारं वृणीते but comp. TB. I. 6. 9. 1.

णानुपूर्व्यं[1] हवींष्यभिघारयत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राचीनावीतानि कुर्वते विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवींष्युत्तरतः पुरोडाशमासादयति दक्षिणतः करम्भमाग्नेय[2] एव धाना भवन्त्युत्तरत उपविशतो ब्रह्मा च यजमानश्च दक्षिणतो ऽध्वर्युराग्नीध्रश्चाथैनत्परिश्रयन्ति तस्योदीचीं द्वारं कुर्वन्ति स यो बलवान्स्यात्स माहानेनोदकुम्भेन संततया धारया त्रिर्पसव्यैः परिषिञ्चन्परीहीति स तथा करोति निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह ॥ १३ ॥

सोमाय पितृमते ऽनु स्वधेति पूर्वार्धात्पुरोडाशस्यावद्यति पूर्वार्धाद्धानानां पूर्वार्धात्करम्भस्याभिघारयति प्रत्यनक्ति दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों[3] स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति सोमं पितृमन्तꣳ स्वधा कुर्विति ये स्वधेत्यागूर्य स्वधामह इति वा[4] स्वधा नम इति वषट्करोति वषट्कृते

---

1 ०पूर्वꣳ all.

2 Thus FJ (?); ०आग्नेया HBT; अया Be.

3 Here and in the corresponding passages some of the MSS. have ०त्याश्रावयति instead of ०यति० and आ instead of ओं।

4 Thus here and in the four corresponding passages BT; JF Be have every time ये स्वधामह इत्यागूर्भवति instead of ये स्वधेत्यागूर्य स्वधामह इति वा; H has this passage four times thus: ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोति ये स्वधेत्यागूर्य स्वधामह इति वा।

जुहोत्यथोपस्तीर्य मध्याद्धुतानामवद्यन्नाह पितृभ्यो बर्हिषद्भ्यो ऽनु स्वधेति । मध्याद्धुतानामवद्यति । मध्यात्करम्भस्य । मध्यात्पुरोडाशस्याभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄन् बर्हिषदः स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्यापरार्धात्करम्भस्यावद्यन्नाह पितृभ्यो ऽग्निष्वात्तेभ्यो ऽनु स्वधेत्यपरार्धात्करम्भस्यावद्यत्यपरार्धात्पुरोडाशस्यापरार्धाद्धुतानामभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄनग्निष्वात्तान्स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्य दक्षिणार्धात्पुरोडाशस्यावद्यन्नाहाग्नये कव्यवाहनाय स्विष्टकृते ऽनु स्वधेति । दक्षिणार्धात्पुरोडाशस्यावद्यति । दक्षिणार्धाद्धुतानां । दक्षिणार्धात्करम्भस्य । द्विरभिघारयति । न प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यों स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयत्यग्निं कव्यवाहनꣳ स्विष्टकृतꣳ स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते दक्षिणार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणꣳ शलाकामित्यग्नावनुप्रहरत्यथैने सꣳस्रावेणाभिजुहोत्यथ दक्षिणतो ऽत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा यज्ञोपवीतानि कुर्वते । विपरिक्रामन्त्येत ऋत्विजो । विपरिहरन्ति हवीꣳषि । दक्षिणतः

पुरोडाशमासादयत्युत्तरतः करम्भमांसश्च[१] एव धाना भवन्ति[२]। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतो ऽध्वर्युराग्नीध्रश्चाथ प्राशित्रमवदायेडामवद्यति। ॥ १४ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं। जिघ्रेत्[३] भक्षयित्वा बर्हिषि संन्यस्यन्त्यथ प्राचीनावीतानि[४] कृत्वा पुरोडाशं धानाः करम्भमिति पात्र्याꣳ संप्रयौति। तिसृषु स्रक्तिषु[५] पर्शवेषु त्रीन्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्विति दक्षिणस्याꣳ श्रोण्यामेतत्ते पितामहासौ ये च त्वामन्विति दक्षिणे ऽꣳस। एतत्ते प्रपितामहासौ ये च त्वामन्वित्युत्तरे ऽꣳस। उत्तरस्याꣳ श्रोण्यां लेपं निमार्ष्ट्येषा युष्माकमियमस्माकमिमां वयं जीवा जीवन्तो ऽनुसंचरन्तो भूयास्मेत्यथ पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य[६] यज्ञोपवीतानि कृत्वाहवनीयमुपतिष्ठन्ते सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि। प्र नूनं पूर्णवन्धुर स्तुतो यासि वशाꣳ अनु। योजा न्विन्द्र ते हरी इत्यानमितोपतिष्ठन्ते। ऽथ गार्हपत्यमुपतिष्ठन्ते ऽथ-

---

१ Thus only F; मया Be; चामय: the other MSS.

२ BT ins. उत्तरत उदकुंभो।

३ Thus (comp. Āpastamba's अवमृश) T Bh. Koś., the other MSS. also Prayoga I.O. जिघ्रेत्।

४ Here and in the following passages the MSS. have sometimes the singular instead of the plural: यज्ञोपवीत, प्राचीनावीतं।

५ स्रक्तीषु Be H.

६ *Be JF ins.* अथ।

अमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी इत्यां तमितोऽपतिष्ठन्ते ऽथ प्राचीनावीतानि कृत्वान्वाहार्यपचनमभिप्रपद्यन्ते ऽक्षन्पितरो ऽमीमदन्त पितरो ऽतीतृपन्त पितरो ऽमीमृजन्त पितरः । परेत पितरः सोम्या इत्यां तमितोऽपतिष्ठन्ते स यो बलवान्स्यात्स आहवनीयादुदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन् परीहीति स तथा करोति निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्याहरणप्रीत्येव[1] कशिपूपबर्हणे आञ्जनाभ्यञ्जने ददात्यथ वासांसि ददात्यथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते ऽथ वीरं याचते ऽथैनानुत्थाप्य प्रवास्य तिसृभिर्मन आह्वयते मनो न्वाह्वामहे आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथैतान्पिण्डानप्सु पर्णसेवैरग्नावनुप्रहरति व्यत्यच्छिन्दन्ति परिश्रयणमथ यज्ञोपवीतानि कुर्वते ऽथ[2] संप्रैषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथ जुह्वपभृतावादायात्याक्रम्याश्राव्याह देवौ यजेति[3] वषट्कृते जुहोति यज[4] यजेत्युपबर्हिषौ द्वावनूयाजाविष्टोदङ्कुत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति संयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्ताव्य स्रुचौ विमुच्यापैव समिष्टयजुर्जुहो-

---

१ Thus B Be HF. Keś.; याचरणप्रीत्येव T; J corrupt.

२ Thus Be JF; °वीतं कृत्वाथ the other MSS.

३ यजयजेति Be H.

४ om. Be F.

त्यथैतेषाꣳ शस्त्राणां द्वे द्वे उदाहरन्त्यथ यज्ञोपवीतानि कृत्वा प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठन्ते प्रजापते न त्वदेतान्यन्य इत्यथैतां द्वितीयां जपति यदन्तरिक्षं पृथिवीमुत द्यामिति । संतिष्ठते महापितृयज्ञः । ॥ १५ ॥ चतुर्थः ॥

यावदेवाचाध्वर्युस्तिष्ठति तावदेष प्रतिप्रस्थाता प्रतिपूरुषं त्रैयम्बकानेककपालानेकातिरिक्तान्गार्हपत्ये श्रपयित्वानभिघारितानुद्वास्य पात्रे वा शरावे वा जरत्कोशविले वा समुप्योपास्ते ऽथ याचति नीललोहिते सूत्रे अन्तमं[1] पर्णमन्तमागाराद्देकोल्मुकमुद्‌पाचमित्यैतत्समादाय गार्हपत्यमुपतिष्ठन्ते यावन्तो गृह्या स्मस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छेत्यथोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य नित्यसंपन्नश्चतुष्पथ स्पष्टो भवति । यद्यु वै न भवत्यनसा वा रथेन वा वियान्ति । तदेतदेकोल्मुकमुपसमाधाय[2] संपरिस्तीर्यान्तमे पर्णे सर्वेषां त्रैयम्बकाणाꣳ सकृत्सकृत्समवदाय जुहोत्येक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथासति सुगं मेषाय मेष्या अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम् । यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्स्वाहेत्यथैतदन्तमं पर्णं यं द्वेष्टि तस्य

---

1 Here and infra the MSS. have sometimes चतिम॰ ।

2 एतद् only FJ ; the other MSS. om.

संचरे पशूनां न्यस्यति । यदु वै न हेम्याकवटे[1] न्यस्तान्येतेषां त्रैयम्बकाणामेकैकं व्युत्प्रयच्छति द्वौ यजमानायैतमग्निं त्रिः प्रदक्षिणं परियन्ति[2] दक्षिणानूरूनुपाघ्नानास्त्र्यम्बकं[3] यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माम्ट-तादिति । सकृत्परीत्योत्तरतस्तिष्ठन्त्युत्क्षिदन्ति[4] । भगाय त्वेति क्षिपन्त । एवमेव द्वितीयं परियन्त्येवं तृतीयमथैषा पतिकामा[5] त्रिरपसलैः पर्येति सव्यमूरूमुपाघ्नाना[6] त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति । सकृत्परीत्योत्तरतस्तिष्ठन्त्युत्क्षिदति[4] । भगाय त्वेति क्षिपत । एवमेव द्वितीयं पर्येत्येवं तृतीयमथैनान्यजमानस्याञ्जलावाव-पति ॥ १६ ॥

प्रजया त्वा मꣳसृजामि मासरेण सुरामिवेति । तान्यज-मानः पत्न्यञ्जलावावपति प्रजया त्वा पशुभिः मꣳसृजामि मासरेण सुरामिवेति । तान्पत्नी दुहित्रे भगकामायै भगेन

---

१ Thus Bh.; चात्वालवटे T; चावटे B; the other MSS. चावटे, comp. X. 48.

२ Thus only Be; the other MSS. write पर्येति ।

३ Thus BH; उपघ्नाना° J Be; उपघ्नानां F; उपनिघ्नानाम् T; उपघ्नाना: Keś.

४ Thus BH; उत्किरन्ति (as TBr. I. 6. 10. 5) the other MSS., but comp. Dvaidhasūtra: त्रैयम्बकाणामुत्क्षेदन इति ।

५ Instead of अथैषा पतिकामा BF have अथ दुहिता भगकामा ।

६ Thus BH; उपघ्नाना Be JF Keś.

त्वा संसृजामि मासरेण सुरामिवेत्यथैनामूत्तम चोष्य नीललोहिताभ्याꣳ सूत्राभ्यां विग्रथ्य शुष्के वा स्थाणौ विप्रवाणां[1] वा बध्नात्येष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतो ऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासोमित्यां तमितो ऽप-तिष्ठन्ते ऽथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्यादित्यं चरुं पुनरेत्य निर्वपतीयं वा अदितिरस्यामेव प्रतितिष्ठन्तीति ब्राह्मणꣳ सा प्रसिद्धेष्टिः संतिष्ठते ऽथ विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य श्वेतया शलल्या लोहितायसेन च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते य इमां महीं पृथिवीमृतुभिः पर्यवर्तयन्तो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः। अग्निरीशान ओजसा वरुणो धीतिभिः सह। इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये॥ शीर्ष्णस्तद्धुतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते साकमेधहवीꣳषौदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशास्ते ॥ १७ ॥ पञ्चमः ॥

अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो[2] भवति

---

१ Thus Bc HF, *Dvaidha*, Bh., Koś.; विप्रवाणां BT.

२ Some MSS. read here and *infra* शुनासीर्ये॰।

स उपकल्पयते वेणीं शलल्यां लोहितायसं च क्षुरं चतुर्द-
शानि पुरोडाशकपालानि पञ्च चरुस्थालीरावपन्ति मेक्षणानि
पृषदाज्याय दधीत्यथास्यैताः[1] रात्रिं वायवे वत्सा अपाकृता
भवन्ति। प्रातर्वायव्यं पयो दोहयति[2] सांनाय्यस्य वाहता तूष्णीं
वाथ प्रातर्हुते ऽग्निहोत्रे पृषदाज्यं स्तीर्णापः प्रणीय निर्वपत्याग्ने-
यमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं
चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः
सौर्यमेककपालमिति। एवं पुरोडाशानां याहयित्वा श्रपयि-
त्वाभिवार्य प्राक्त्वाप्येभ्यो निनीय स्वन्वयजुर्हरतीदमेव प्रसिद्धं
पौरोडाशिकं। निर्मन्थ्या तूष्णीं चतुर्थं। पूर्वं परियाहं
परिस्तृणाति। करणं जपत्युद्धन्त्युद्धृतादाग्नीध्रस्यैव हरति। स
यद्युत्तरवेदिं करोति यथा महाहवींष्येवं संतिष्ठते।
यद्यु वा उत्तरवेदिं न करोति यथा वैश्वदेवहवींष्येवं
संतिष्ठते ऽन्यत्र वाजिनादथ पूर्णपात्रविष्णुक्रमैश्चरित्वा विसृजते
व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य वेण्या
शलल्या लोहितायसेन च क्षुरेण शीर्षण्नि च वर्तयते परि च
वपत एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः। तेनाभ्यो मह
आवहदमृतं मर्त्याभ्यः॥ प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्।
येन मासा अर्धमासा ऋतवः परिवत्सराः॥ येन ते ते प्रजापते

---

१ इति found only in BH; the word is missing in all the MSS. also supra page 141, 15.

२ दोहयित्वा TF.

दिवामस्य व्यवर्तयन्। तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ॥ अग्निशिखेन शोचिषा तप आक्रान्तमुष्णिहा शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ ग्रीष्मांस्तद्धुतं तत्सत्यं तद्धुतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्ताद्दिवाये ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टाद्धंतिष्ठन्ते ध्रुवाः सौरीर्यवर्वीरूँ अनुवत्सरीणाऽऽ स्वस्तिमायामस्तु इत्यायाते ॥ १८ ॥ षष्ठः ॥

॥ इति पञ्चमः प्रश्नः ॥

अग्निष्टोमेन यक्ष्यमाणो भवति। स उपकल्पयते कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां च सैषा पृथ्वी वेणीकार्षा भवति त्रिवृदेकतःपाशा द्वाविंशतिं च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूलां च शरेषीकामौदुम्बरं च[1] दण्डं चमसं च[2] व्रतप्रदानं स्थालीं मन्थिकां समेषणामेतानि त्रयोदश यजमानस्यैतावन्त्येव पत्नीमभितो भवन्ति कुम्बं च कुरीरं च वासश्च योक्त्रं चापरिमितानि च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूला च शरेषीकामृन्मयश्च पात्रः शङ्कुश्च स्थाली मन्थिका समेषणा। जुष्टे देवयजने शाला कारिता भवति। पुरोहविषि देवयजने याजयेदित्येतेषां यज्जोषयते। प्राचीनवंशा दिक्षतीकाशा दक्षिणतो वर्षीयसी। तस्यै चतस्रो द्वारः कुर्वन्ति प्राचीं दक्षिणां प्रतीचीमुदीचीं। दक्षिणतो व्रतश्रपणागारं कुर्वन्ति पश्चात्पत्नीशालमथ[3] यदि दूरे तीर्थं भवत्युत्तरेण शालां द्वौ कटपरिवारौ कुर्वन्ति पूर्वं यजमानायापरं पत्न्यै। तयोः प्राचौ द्वारौ कुर्वन्ति। तदुदकुम्भौ निधापयत्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वारण्योरग्नीन्समारोह्य शालामभिप्रैत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य मध्यमे वंशे राजानं प्रबध्नन्ति। परिस्तृणन्ति। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ

१ च only P, the other MSS. om. the word, except F which has चमसं।

२ च om HF.

३ Thus TJ; °शालाम° HBP; °शालीम° F.

गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा यज्ञहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाकूतिं जुहोति यथैव जुहोति। पूर्वाह्ण एवैतौ व्रतदुघयोर्वत्सौ बध्नन्त्यथाभ्यां व्रतोपायनीयं पाययति[1]। तस्याश्रितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्याथाध्वर्युस्तीर्थेनाग्निंभारान्याचत्यथाहेहि यजमानेति। पूर्वया द्वारोपनिष्क्रम्य यथापरस्तादन्त्यथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्ति ॥ १ ॥

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इत्यूर्ध्वाग्रं बर्हिरनूक्षयत्योषधे त्रायस्वैनमिति। स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति। प्रवपति देवश्रूरेतानि प्रवप इति। स्वस्त्युत्तराण्यशीयेत्युप्तान्तं प्रत्यभिमृशत। एतयैवावृतोत्तरं गोदानमद्भिरुनत्ति यजुषा वा तूष्णीं वा। नापिताय क्षुरं प्रयच्छन्नाह नापितोऽश्केशश्मश्रु मे निकृत्तनखं प्रकुतादिति। तं तथा प्राहाथैनमद्भिरभिषिञ्चत्यापो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतप्वः पुनन्त्विति। संप्रधाव्य रज. प्रक्षावयति विश्वमस्मत्प्रवहन्तु रिप्रमित्युदेत्युदाभ्यः[2] शुचिरा पूत एमीति। वसनस्यान्तेन प्रतिच्छाद्याप आचामत्यपो ऽश्नातीति ब्राह्मणमथ प्रदक्षिणमहतं वासः परिधत्ते सोमस्य तनूरसि तनुवं मे पाहीत्यथास्यैतदवनीतं विषिक्तमुदशराव उपशेते। तस्य पाणिभ्याꣳ संप्रक्षाय

[1] Thus J; पाचति T; याचयति BP; पावयति H; वाचयति F.

[2] Corrected according to Bh., Keś., and the parallel passage p. 159. 1. The Mss. have not एदेमि but देमि (BT) and एमि HF; J om.

मुखमेव प्रथममभ्यङ्क्ते महीनां पयो ऽसि वर्चोदा असि वर्चो मयि धेहीत्यनुलोममा पादाभ्यामन्यो ऽस्य पूर्वमभ्यञ्जनशेषात्तदाञ्जनं पिष्टं कुब्जुपर्णेते सतूला च शरेषीका। तस्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्णो ऽभिवृत्य कनीनिकायि चक्षुष्या असि चक्षुर्मे पाहीति चिरणिधावं। द्विरन्तरमेव पञ्च कृत्व आङ्क्त इति ब्राह्मणं। पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमथैनमेकविंशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति। यजमानमतिवाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्यथैनं सव्ये पाणावभिपात्य शालामानयत्या वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इति। पूर्वया द्वारा शालां प्रपाद्य-तीन्द्राग्नी द्यावापृथिवी आप ओषधीरित्यथैनमग्रेणाहवनीयं पर्याणीय दक्षिणत उदङ्मुखमुपवेश्याहवनीयमीक्षयति त्वं दीक्षाणामधिपतिरसीतीह मा सन्तं पाहीत्यात्मानम्। ॥ २ ॥

यावद्देवाचाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता पत्नीं दक्षिणसुपपन्नमङ्गिरनभि तूष्णीं। तूष्णीमूर्ध्वायं बर्हिरनूङ्क्षति। तूष्णीं स्वधितिं तिर्यञ्चं निदधाति। तूष्णीं प्रवपति। तूष्णीं-सुप्ताग्रं प्रत्यभिमृशत। एतयैवावृतोत्तरमुपपन्नमङ्गिरनभि तूष्णीमेव। नापिताय क्षुरं प्रयच्छत्याह नापितोऽप्रोपपन्नां मे निकृन्तनखा प्रभूतादिति। तां तथा प्रायाथैनामङ्गिरभिषिञ्चति

तूष्णीं। तूष्णीꣳ संप्रक्षाल्य रजः प्रक्षालयति तूष्णीमद्भिरवहरति[1] तूष्णीं। वसनस्यान्तेन प्रतिच्छाद्याप आचामति। तूष्णीं[2] प्रदक्षिणमहतं वासः परिधत्ते। तूष्णीमभ्यङ्क्ते। तूष्णीमाङ्क्ते। ऽथैनामपरिमितैर्दर्भपुञ्जीलैः पवयति तूष्णीं तूष्णीमेवाथैनामानीयापरया द्वारा शालां प्रपाद्य प्राचीमुदानयन्वाचयति प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु। अथाहमनुकामिनी स्वे लोके विशा इहेत्यथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमित्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयामिष्टिं निर्वपति। तस्यै दशतयमुत्सीदति न यजमानं व्रतमुपनयति न पत्नीꣳ संनह्यति न यजमानभागं करोति न ब्रह्मभागं न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं पचति[3] न पत्नीकरणहोमेन चरति न समिष्टयजुर्जुहोति न पूर्णपात्रे यजमानं वाचयति न विष्णुक्रमान्क्रमते। ऽथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यानीयाज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति ॥ ३ ॥

आकूत्यै प्रयुजे ऽग्नये स्वाहा मेधायै मनसे ऽग्नये स्वाहा दीक्षायै तपसे ऽग्नये स्वाहा सरस्वत्यै पूष्णे ऽग्नये स्वाहेत्यथ

---

१ अद्भिर् ( Instr.) all, instead of the Abl., that was to be expected; H omits the word.

२ तूष्णीं twice BF.

३ Thus HTJF; पाचयति B.

स्रुचि चतुर्गृहीतं गृहीत्वा स्रुवा पञ्चमीं जुहोत्यापो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाध्वरस्य पूर्णाꣳ स्रुचमौद्ग्रहणं जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यम्। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेत्यथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथाग्रेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छति कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां चौदुम्बरं दण्डं पञ्चममुष्णीषꣳ षष्ठमथ प्रतिप्रस्थाता पत्न्यै प्रयच्छति कुम्बं च कुरीरं च वासश्च योक्त्रं च शकुं च ॥ ४ ॥ प्रथमः ॥

अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तस्य शुक्लकृष्णे संमृशति शुक्ले ऽङ्गुष्ठो भवति कृष्णे ऽङ्गुलिर्ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृच इत्यथ दक्षिणं जान्वाच्याभिसर्पतीमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमेत्यथोपस्थं कृत्वा प्रदक्षिणं मेखलां पर्यस्यत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छेति पाहि मा मा मा हिꣳसीरिति निष्टर्क्यं ग्रन्थिं ग्रथ्नात्यस्मिन्काले प्रतिप्रस्थाता योक्त्रेण पत्नीꣳ संनह्यत्याशासाना सौमनसꣳ सं त्वा नह्यामीति द्वाभ्यामथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छेति वसनस्यानीकाग्रेषु वाचयति नक्षत्राणां मातीकाशात्पाहीति प्रतिकम्य वसनस्यान्तात्प्रदक्षिणमुष्णीषेण शिरो वेष्टयति श्रिया

ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसायेत्येतस्मिन्काले प्रतिप्रस्थाता पत्न्यै कुम्बकुरीरमधूहति तूष्णीमथास्यै कृष्णविषाणा त्रिवलिर्वा पञ्चवलिर्वा शाखा रज्ज्वा परिहृत्या मण्डपरवद्विषयिता[1] तां यजमानाय प्रयच्छतीन्द्रस्य योनिरसीति मा मा हिंसीरिति यजमानः प्रतिगृह्णाति तां वसनस्यान्तमायां[2] दशायां बद्ध्वा तयान्तर्वेदि लोष्टमुद्धन्ति कृष्यै त्वा सुसस्याया इति सुपिप्पलाभ्यस्त्वौषधीभ्य इति दक्षिणं गोदानं कण्डूयत एतस्मिन्काले प्रतिप्रस्थाता पत्न्यै शङ्कुमावध्नात्येतेन कण्डूयस्वेत्यथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितꣳ सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णात्यथैनं यज्ञस्यान्वारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वाताद्दारभ इत्यत्र मुष्टी[3] करोति वाचं[3] यच्छत्यथाहादीक्षिष्टायं ब्राह्मणो ऽसावित्यसंगोत्रो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता तमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यश्च सोमपेभ्यः

---

१ The reading of these difficult words is not wholly certain; H reads as above; B: मंडपरवविवाविष॰, J: मंडपरवयाविष॰; T: मण्डपपरबद्धाविष॰; F: मडपरहितावाविष॰; P: मंडपरवहितावाविष॰; comp. the Bhāṣya (and Keś.) मण्डपरवत् शाकलपाशवत् बद्धा, where बद्धा is the periphrase of विषयिता।

२ वंतिमायां BJ.

३ Thus (without च) TJF; BH ins. च after वाचं and after मुष्टी, but comp. TS. VI. 1. 4. 3.

प्रभूम इति । त्रिरुपांश्वाह । देवेभ्य एवैनं प्राह । त्रिरुच्चैरुप-
निष्क्रम्योभयेभ्य एवैनं देवमनुष्येभ्यः प्राहेति ब्राह्मणमथैनम्
वङ्गाचि ॥ ५ ॥

दीक्षितोऽसि दीक्षितवादं वद सत्यमेव वद मानृतं मा
स्वपिष्ठा मा कण्डूयथा मापावृथा यदि स्वपाया अभिव्यज्य ।
स्वपावै यदि कण्डूयावै कृष्णविषाणया कण्डूयावै यदि वाचं
विसृजेर्वैष्णवीमृचमनुद्रवतात्स्मा त्वान्यच दीक्षितविमितात्सूर्यो
ऽभ्युदियादभिनिम्रुक्तावानि[1] देवतानामानि यथाख्यातं
तान्याचक्षाथ यान्यदेवतानामानि यथाख्यातं तान्याचक्षाथ
उपरिष्टाद्विचक्षणं धेहि चनसितवतीं विचक्षणवतीं वाचं वद १०
कृष्णाजिनान्मा व्यवच्छेत्था दण्डाच्चेति । स एवमेवैतत्सर्वं
करोत्यथोपसमिन्धनवेलायामुत्तरेणाहवनीयं तिष्ठन्संप्रैषमाहाग्नी-
ज्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ[2] पत्नि वाचं
यच्छेति । संप्रेष्य वाचंयमयोरन्ते दोहयतोऽथाध्वर्युः[3] पूर्वया
द्वारोपनिष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य गार्हपत्येऽग्निहोत्रविधिं १५
श्रपयित्वा तप्तोदगुद्वास्य शीतीकृत्वातञ्च वासनातञ्च वीतरे
शालामुखे निधाय वाचयत्यथ प्रतिप्रस्थाता दक्षिणया द्वारोप-
निष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य अन्वाहार्यपचने तप्तोदगुद्वास्य
शीतीकृत्वातञ्च वासनातञ्च वा दक्षिणे शालामुखे निधाय

---

१ Thus HF; ०भ्युदयात् T; ०भ्युदमात् BJ.

२ BT ins. अथ वाचं यच्छ ।

३ JF ins. प्रदक्षिणमावृत्य ।

इत्यथास्मै कꣳसे वा चमसे वा निःषिच्य व्रतं प्रयच्छति । तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नो ऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेति । यजुषा यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयत्य- थास्मिन्काले प्रतिप्रस्थाता पत्न्यै पात्रे निःषिच्य व्रतं प्रयच्छति । तत्सा परिश्रित्य व्रतयति तूष्णीं । निर्णिज्य पात्रे प्रयच्छतो । ऽथ तथैव पुरा नक्षत्राणामन्तर्धानात्संप्रेष्य वाचंयमयोर्व्रते दोहयतो । ऽथोदित आदित्ये यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजते । समानो वाचो विसर्गः समानꣳ संवेशनयजुः समानं प्रबुद्धयजुः समानमपामाचमनꣳ समानं व्रतमथ यनौद्वाराण्प्रक्षिणोति । स यं मन्यते न मा प्रत्या- ख्यास्यतीति तं प्रथममभि प्रक्षिणोति विश्वे देवा अभि मामाववृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्व- सुदावेत्याहरन्तं दृष्ट्वा जपति गामाहरन्तꣳ रास्वेयत्सोमा भूयो भर मा पृणन्पूर्त्या विराधि माहमायुषेति । स यथारूपं प्रतिगृह्णाति ॥७॥

चन्द्रमसीति हिरण्यं वस्त्रमसीति वास । उस्रासीति गाꣳ हयो ऽसीत्यश्वं । छागो ऽसीति छागं । मेषो ऽसीति मेषमथ यद्ब्रा- ह्मणेनानादिष्टं भवति प्राजापत्यमसि मम भोगाय भवेत्येव तत्प्रति- गृह्णाति । ताः समुदायुत्य[1] रक्षन्ति । तासां या नश्यति वा म्रियते

---

[1] Thus BTJ ; समुदायित्वत्य H ; समुदायेत्वत्य F.

वा वायवे त्वेति तामनुदिशति। याप्सु वा पाम्रे वा वरुणाय त्वेति ताम्। या श्वभ्रं वा प्रोयंते गर्तं वा पतति निर्ऋत्यै त्वेति ताम्। यामश्विर्वा व्याघ्रो वा हन्ति रुद्राय त्वेति ताम्। तासां तिस्रः पराच्यो। ऽथ येयं नष्टा यदि विन्देयुः कथꣳ स्यादित्येतदनुदिष्टैव[1] स्यादित्येतदेकं। कमस्या[2] अतः[2] श्रेयाꣳसं[2] प्रतिग्रहीतारं लभेत। दक्षिणाभिरेवैनाꣳ[3] सह दद्यादित्येकं। वायव्ययैवैनया[4] यजेतेत्येतदपरम्[4]। ॥ ८ ॥ द्वितीयः ॥

अथातः प्रयाणस्यैव मीमाꣳसा। दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते सꣳसृजन्ति व्रते। संवध्नन्ति व्रतदुघयोर्वत्सावादधति[5] यदाधेयं भवति नीडे गार्हपत्यं प्रउग आहवनीयमपि वारण्योरग्नीन्समारोह्य बृहस्पतिवत्यर्चा प्रयाति भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्यथ यद्येनं यान्तं व्रतवेलोपाधिगच्छत्युत्तरतो ऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयति। तूष्णीं तृणोदकायावस्यत्यथ यद्यपर्याणा[6] आप उपाधिगच्छति तज्जपति देवीरापो अपां

१ Thus BF (J om. this passage); अनुद्दैव T; अनुदिष्टैव H.

२ Thus T; कमस्यात्श्रे॰ BJ; अमस्यात् तः श्रे॰ F; कमास्यात् श्रे॰ H.

३ एव om. HTF.

४ Thus JF (but नयायजेवे॰) H (but ॰वैनयजे॰); B: वायव्ययैवैनय-जयेत्ये॰; T: वायव्यैवेनयायजतेत्ये॰।

५ Thus only T an. Bh.; ॰दधाति the other MSS.

६ Thus all the MSS. and Keś., also the citation in the Dvaidha-sûtra. I did not venture to correct यपरियाणा, as only the Vivaraṇa reads

त्यथ चतुर एवाज्यस्य गृहीत्वा, आह सोमायेत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते ऽपरार्धे जुहोत्यथ चतुर एवाज्यस्य गृहीत्वा आह सवित्र इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह सवितारमित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धे जुहोत्यथोपस्तीर्य पूर्वार्धाच्चरोरवद्यत्यादित्या इत्युपांश्वनुब्रूहीत्युच्चैः' पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्त्यत्याक्रम्याश्राव्याहादितिमित्युपांशु यजेत्युच्चैर्वषट्कृते मध्ये जुहोत्यथ वै भवत्यदितिमिडा मारुतीमृचमन्वाह मरुतो यद्ध वो दिव इत्यथोपस्तीर्योत्तरार्धाच्चरोरवद्यत्याग्नये स्विष्टकृते ऽनुब्रूहीत्यथ वै भवत्यष्टावत्तः स्विष्टकृद्द्वादशावत्तेडा' द्विरभिघारयति न प्रत्यनक्त्यथैतन्मेक्षणमधोऽधः स्रुचावाग्नीध्रायोपयच्छत्याहातिवालयतादेव मानुप्रहार्षीरित्यत्याक्रम्याश्राव्याहाग्निं स्विष्टकृतं यजेति' वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणमाहवनीये ऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः सादयत्यथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यत्युपहूतायामिडायामग्नीध आदधाति षडवत्तं' प्राश्नन्ति' मार्जयन्ते' ॥ ११ ॥

अथ परिकर्मिणः संश्रास्यनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राश्नीतायैतां वत्सालीं सचामकाषामेतन्मेक्षणमेतं वेदमेतद्धिरंषतुष्टयमुदयनीयाय निधत्तादिति' संस्थन्तः[1] प्राय-

[1] Thus B; सख्यन्तः T (Grantha!); संयुवंतः J; संयुतः H: संदुवता (प्रायणीया) F.

णीयः संतिष्ठते । ऽथैतत्पूर्वपाद्यमन्तर्वेदि निनयत्यथैतद्ध्रुवाया आज्य-
मादाय स्रुचि चतुर्गृहीतं गृहीत्वा सूत्रेण हिरण्यं निष्टर्क्यं
बद्ध्वा दर्भनाड्यां प्रबध्य स्रुच्यवदधातीयं ते शुक्र तनूरिदं
वर्चस्तया संभव भ्राजं गच्छेत्यथैतां दर्भनाडीꣳ स्रुग्दण्ड उप-
संगृह्याहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा
जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय
स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचति स्फ्यमुदपात्रं बर्हि-
र्हिरण्यमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानोऽनूची पत्नी
ग्रासीं पद्गुरणीमादाय पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां
तिष्ठन्यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेवꣳ हवि-
रित्यथैनꣳ हिरण्यमन्तर्धायादित्यमुदीक्षयति सूर्यस्य चक्षुरा-
रुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो
विपश्चितेत्यथैतांꣳ सोमक्रयणीमग्रेण शालामुदीचीमतिविक्ष-
यन्ति । तामनुमन्त्रयते चिदसि मनासीत्यान्तादनुवाकस्याथास्य
दक्षिणस्येमस्य[1] सप्तमं पदं जोषयध्वमिति । तस्यै षट्पदान्यनु-
निष्क्रामति ॥ १२ ॥

वस्व्यसि रुद्रास्यदितिरस्यादित्यासि शुक्रासि चन्द्रासीति ।
सप्तमं पदमभिगृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो
वसुभिराचिकेत्वित्यथैतस्मिन्पदे हिरण्यं निधाय संपरिस्तीर्याभि-
जुहोति पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे
घृतवति स्वाहेत्यपोद्धृत्य हिरण्यꣳ स्फ्येन वा कृष्णविषाणया वा

---

1 Thus BJH; दक्षिणेमस्य T; F corrupt.

पदं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथैनत्स्फ्येनोपसंवापं यावत्सम्भूतं पात्र्याꣳ संवपत्यस्मे राया ऽस्मे राय इति त्वे राय इति यजमानाय प्रयच्छति तोते राय इति यजमानः पत्न्या अथ पत्नीꣳ सोमक्रयण्या समीक्षयति सं देवि देव्योर्वश्या पश्यस्वेत्यथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशीत्यथ यजमानः सोमक्रयणीमीक्षते माहꣳ रायस्पोषेण वियोषमित्यथैनद्धिरण्मह्निः[1] प्रज्ञाश्य मध्यमायामङ्गुलौ बध्नीते ऽथैनं[2] पदाग्रयमङ्क्षिवपञ्जत्यनुसृजन्ति[3] सोमक्रयणीं नयन्ति पत्नीं नि पद दधति ॥ १३ ॥ तृतीयः ॥

अथाचैन निष्टन्याचति अजं च छागां च कृष्णवलक्ष्याऊर्णास्तुके[4] उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीमित्यथ पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३[5] इति शुद्ध इतीतरः

---

१ Thus ( with ऋषड्ड ) all, also Keś.

२ Thus all, also, a copy of the Nivaraṇa ; Keś. : अथैनं ।

३ FH : उपपश्य (or अ)तिजयंति सोम॰ ; B : उपपक्षयत्युजंति सोम॰ ; T. उपपक्षअत्यनृजन्तौ सोम॰ ; J : उपपक्ष्यति सोम॰ ; P : उपपक्षअत्यनृजति ; Keś. has: अथैनं पदाग्रयं... उपपक्षजति । सोमक्रयणीमनुसृजंति The Somaprayoga I. O. 1262 has : पदद्वैध अपो निनीयतिजयंति ( thus ! ) सोमक्रयणीं । Are we to read : अतिजयन्ति instead of अनुसृजन्ति ?

४ BT ॰वलक्षा ऊर्णा॰, the other MSS. also P, ॰वलक्षू॰ comp. the note on page 166.

५ The pluti sign is added in one of the MSS.-only ( H ).

प्रत्याह । सुविचितꣳ[1] राजानं पुरस्तात्प्रागभिपर्यस्यन्नेष ते
गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति
मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय
ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादि-
९ त्यथैतद्रोहितं चर्मानडुहमुत्तरलोमास्तीर्याथैतद्धिरण्यं[2] वासः
प्राचीनदशमुत्तरार्धे चर्मण उपस्तृणात्यथ हिरण्यवता पाणिना
राजानमभिमृशत्यꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते
काममवतु मदाय रसो अच्युतो ऽमात्यो ऽसि शुक्रस्ते ग्रह
इत्यथैनमतिष्कन्दयन्मिमीते । एकयैकयोत्सर्गं मिमीते ।
१० ऽयातयाम्नियायातयाम्नियैवैनं मिमीते । सर्वास्वङ्गुष्ठमुपनिगृह्णा-
त्यभि त्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवꣳ
रत्नधामभि प्रियं मतिम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवी-
मनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरिति । पञ्चकृत्वो
यजुषा पञ्चकृत्वस्तूष्णीं । दशकृत्वो मिमानो[3] ऽर्धवेलाꣳ राज्ञो
११ मिमीते । ऽथातिरिक्तꣳ राजानं प्रजाभ्यस्त्वेत्युपसमूहति । समु-
ह्य वाससो ऽन्तान्प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वेति ।
व्यानाय त्वेत्यनुसृजत्यथोपरिष्टादङ्गुष्ठावकाशं कृत्वा यजमान-
मवेक्षयति प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्त्वित्यथैनं
चर्मणि निदधाति । तं ततः कौत्स आदत्ते । ऽद्भिरभ्युक्ष्य

---

१ Thus HFP (comp. Padârthanirv. p. 270, No. 56); the other MSS. सुवि॰ ।

२ The clause अथैतद्रोहितं ... वासीयं om. PJTH. Keś. cites them.

३ मिमानो JT.

चन्द्रेऽरूपत्यथोपोत्थाय पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३[1] इति । क्रय्य इतीतरः प्रत्याह । मूजवता३[1] इति । मूजवतो हीतीतरः प्रत्याहाथैनं गवा पणते गवा ते क्रीणानीति । क्रीतः सोम इत्याह सोमविक्रयी वयाꣳसि व्याचक्ष्वेत्येषा ते सोमक्रयणी चन्द्रं ते छागा ते वस्त्रं त इत्यथैनꣳ हिरण्येन पणते ॥ १४ ॥

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यवन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन संयच्छे[2] गोरित्युक्त्वास्मै चन्द्राणीति यजमानाय प्रयच्छत्यथैनं प्रतीचीनग्रीवयाजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीत्यस्मे ते बन्धुरिति यजमानमीक्षते । मयि ते रायः श्रयन्तामित्यात्मानमथैनां प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदीचीमुत्सृजति[3] । सैषा कौत्सस्य भवत्यथ कौत्साद्राजानमादत्ते मित्रो न एहि सुमित्रधा इति । तं यजमानस्योरौ दक्षिण आसादयतीन्द्रस्योरुमा विश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनमित्यथैनं प्रत्यपोर्णुते यजमानो । ऽद्भिरभ्युक्ष्य कौत्साय वा परिकर्मिणे वोष्णीषं प्रयच्छत्यथ यजमानꣳ शुक्रयोर्णास्तुकयाध्यस्यत्यस्मे ज्योतिरित्यथैतां कृष्णामुपग्रथ्नातीदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीति । तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इत्यथ सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते

१ Here again only H and Kuś. have the pluti sign.

२ Some MSS. have [illegible], the Mantramālā [illegible]।

३ Most of the MSS. have आवृत्य instead of आवर्त्य।

यः सोमक्रयण्यास्तत्पदं मा वो दभन्नित्यथैनमादायोपोत्तिष्ठत्युदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अन्विति । दक्षिणत एतत्सोमवाहनमनः प्रागीषं सोमक्रयणमुपस्थितं भवति । तदभिप्रैत्युर्वन्तरिक्षमन्विहीति । तस्य नीडे कृष्णाजिनमास्तृणात्यदित्याः सदो ऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानमथैनमुपतिष्ठते ऽस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानीत्यथैनं वाससा परितनोति वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रावित्यथोदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं पुरस्तात्प्रत्यानह्यत्यथ सोमवाहनावानीयमानौ प्रतिमन्त्रयत उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनाविति । तयोर्दक्षिणं पूर्वं युनक्ति वरुणस्य स्कम्भनमसीति । वरुणस्य स्कम्भसर्जनमसीति शम्यामवगूहति । प्रत्यस्तो वरुणस्य पाश इति योक्त्रमेतयैवावृतोत्तरमनड्वाहं युनक्त्यथ दक्षिणामीषामन्वारभ्य संप्रेष्यमाह ॥ १५ ॥

सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वय मा तु लमाक्रा[1]यजमान आह्वयतीति । यदा यजमानस्त्रिरुपांश्वाह्वयते ऽथैव सुब्रह्मण्यो ऽन्तरेणेषे तिष्ठन्पलाशशाखां धारयन्सुब्रह्मण्यामाह्वयति सुब्रह्मण्योꣳ सुब्रह्मण्योमिति त्रिरुक्तायां प्रच्यावयन्ति प्रच्यवस्व भुवस्पते विश्वान्यभि

---

1 Thus F only; the other MSS. •क्राके• Read •क्रो यज• (?)।

धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुराहदच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः संस्कृतमिति। अथ शिष्टः राजानं परिवहन्त्यथैतान् सोमोपसंक्रामतो ऽध्वर्युश्च यजमानश्च यजमानस्य स्वध्ययनयत्रपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति। अथ यायेण शालां तिष्ठत्सोममानस्य राजानं प्रतिमन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसतेत्यथैतत्सोमवाहनमनो ऽग्रेण शाला-मुदगीषमुपस्थापयन्ति[१]। तदुपस्तभ्नोति वरुणस्य स्कम्भनम-सीति। वरुणस्य स्कम्भसर्जनमसीति शम्यामुद्वृहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रमेव वै भवति विमुक्तो ऽन्यो ऽनड्वानवत्य-विमुक्तो ऽन्यो ऽथातिथ्यं गृह्णाति यज्ञस्य संतत्यै पत्न्यन्वारभत इति ब्राह्मणमथाहेहि यजमानेति। पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्यायाः स्तीर्त्वाप: प्रणीयातिथ्यं निर्वपत्यन्वारब्धायां पत्न्यामथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा ॥ १६ ॥

अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा सोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वातिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वाग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा श्येनाय त्वा

१ Thus J, Keś., Padārthanirv.; the other MSS. °यन्ति।

सोमक्रयणे विष्णवे त्वा जुष्टं निर्वपामीति। पञ्चकृत्वो यजुषा। हविष्कृता वाचं विसृज्यैतयैवावृतोत्तरमनसाहं विसृजत्यथैते ब्राह्मणाश्चत्वार आसन्दीमाददते। ऽथ यजमानो नीडाद्राजानमादत्ते या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति। पूर्व एवासन्द्या प्रतिपद्यन्ते। ऽन्वपात्रा यजमानो ऽन्वकूढ्र[1] उदपात्रेण। पूर्वया द्वारा शालां प्रपादयति गच्छस्थानः प्रतरणः सुवीरो ऽवीरहा प्रचरा सोम दुर्यानित्यथैनामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधाति[2]। तस्यां कृष्णाजिनमास्तृणात्यदित्याः सदो ऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानमथैनमुपतिष्ठते वरुणो ऽसि धृतव्रतो वारुणमसीति। समुच्छ्रित्य कृष्णाजिनस्यान्तानन्ययान्यया विग्रथ्य वस्त्रे प्रबध्नाति ग्रंथ्योर्देवानाꣳ सख्यादित्यथापरावासन्दीपादावन्तरेण ब्राह्मणो ऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपसश्छिदम्नसीत्यथैनं वारुण्यर्चा परिचरति तत्त्वा यामि ब्रह्मणा वन्दमान इत्यथैनꣳ संशास्ति मा राजानं चाहवनीयं चान्तरेण कश्चन संचारीन्मैनꣳ सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषो मा साधस्त्यो ऽनुप्रपादीदित्यथास्मै मधुपर्कं च गां च प्राहुस्तामध्वर्युर्विशास्ति। ॥ १७ ॥ चतुर्थः ॥

अपयन्त्येतमातिथ्यं वैष्णवं नवकपालं। तेन सह मदन्तीरधिश्रयति। शिल्पवदेतद्विपावर्हिरातिथ्यस्य भवति। कार्ष्मर्यमयैः

१ चूढ़ F; चुढ़ H; ग्रूढ़ PBJ; चूढ़ T (Grantha!)

२ Thus only P, comp. Keśava (ब्राह्मणा यत्र निदधति); निदधाति the other MSS.

परिधिभिराश्ववालेन प्रस्तरेणैषवीभ्यां विधृतीभ्यां तेन शिष्य-
वत्सं पुरोडाशस्य घाहयित्वा अपथित्वाभिवास्य[1] प्राक्त्यागेभ्यो
निनीय साम्नयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं चियंजुषा
तूष्णीं चतुर्थं। पूर्वं परियाहं परिगृह्णाति। करणं जपत्यु-
द्धन्युद्धतादाग्नीध्रविर्हरति। यदाग्नीध्रविर्हरत्ययोत्तरं परियाहं
परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं सान्त्वा संप्रेषमाह
प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनो-
देहीत्याहृतास्तु प्रोक्षणीपूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य
प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य स्रुवं च स्रुचश्च संमार्ष्ट्याज्येनोदेत्याज्यं[2]
च प्रोक्षणीश्चोत्पूय प्रसिद्धं चतुर्गृहीतानि वा पञ्चगृहीतानि
चाज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति।
वेदिं प्रोक्षति। बर्हिः प्रोक्षति। बर्हिरासन्नं प्रोक्ष्योपनिनीय
पुरस्तादाश्ववालं प्रस्तरं गृह्णाति। पञ्चविधं बर्हिः स्तीर्त्वा प्रस्तर-
पाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधा-
वादधात्यैषवी विधृती तिरश्ची सादयति। विधृत्योराश्ववालं
प्रस्तरं। प्रस्तरे जुहूं। बर्हिष्युत्तरे। एता असदन्निति समभिमृश्य
प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्याथैतं पुरोडाशमुपस्तीर्णाभिघारि-
तमुद्वास्य च तुषोपातिथ्यमासादयत्यथ संभारान्व्याचष्टे। ऽथ
निर्मन्थ्यस्याहृता निर्मन्थ्येन चरति। प्रहृत्याभिजुहोत्यथेभास्य-
मिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं।
न समिधं परिशिनष्टि। वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु

[1] अपथित्वा om. HTB; read by PJF.
[2] उदेत्याज्यं BJ; उदेत्याज्यं the other MSS. also P.

मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययत्यꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति । यजमानमतिवाचयत्याप्यायय सखीन्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेत्यथाप उपस्पृश्य यथायतनमुपविशन्त्यथाध्वर्युर्वाजवतीभ्याꣳ स्रुचौ व्यूहति । विधृतीभ्यां प्रस्तरꣳ समुत्सुप्याप्रतिधृष्णꣳस्त्रेधानक्ति । न प्रस्तरायाश्रावयति । न बर्हिरनुप्रहरति । तं दक्षिणार्धे वेद्यै निधाय तस्मिन्दक्षिणोत्तरिणौ निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति । परिधिषु शकलानुपसंगृह्णाति प्रस्तरे बर्हिर्यावन्मात्रꣳ स्तम्ब्यया विपर्याहवनीये ऽतिवाह्याद्भिरभ्युक्ष्योत्तरतः सादयत्यथ यजमानमवान्तरदीक्षामुपनयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनꣳ सꣳशास्ति संतरां मेखलाꣳ समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पूर्वं[1] व्रतनꣳ सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातो ऽधि व्रतयेति । स एवमेवैतत्सर्वं करोति । ॥ १९ ॥

अथ प्रवर्ग्यस्यावृता प्रवर्ग्येण चरत्यथ स्फ्यमाददान आग्नीध्रीयमदन्तीरधिश्रय हविरधिश्रयैनामुपसीदेत्येतास्वेव मदन्तीषु भूयसीरप आनयत्याज्यमधिश्रयति । तद्धविरथैतस्यैव

१ Thus Keś., Mantramālā ; पूर्वव्रतं the other MSS. also P.

बर्हिष स्तीर्णस्य पर्यवलोपꣳ समयमनुहरतीदमेव प्रविद्धं पौरोडाशिकं । चिर्यनुषा तूष्णीं चतुर्थं । पूर्वं परिधाणं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिधाणं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह सदन्तीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचौ च संमृड्ढि हविषोदेहीत्याहृतासु सदन्तीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य स्रुवं च स्रुचौ च संमार्ष्टि । हविषोदेति । हविश्च सदन्तीश्चोत्पूयाष्टौ हत्वो जुह्वां गृह्णीते । चतुरुपभृत्याज्यस्थाल्यां तृतीयामुत्प्रदाय सदन्तीभिरुपोत्तिष्ठतीध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णात्येकविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैवमौ विधृती तिरश्ची सादयति । विधृत्योराश्ववालं प्रस्तरं । प्रस्तरे जुहूं । बर्हिष्युतरे । एते असदतामिति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य जघनेन गार्हपत्यमुपविश्य देवपत्नीर्व्याचष्टे । ऽथैतेनैव यथेतमेत्याथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मꣳ सकृदा त्रिर्वा । न समिधं परिशिनष्टि । वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे न स्रुग्भ्यामुत्तरमंथ प्रवरं प्रवृणीते । ऽथाश्रावयत्यो श्रावयास्तु श्रौषट् सीद होतरित्येतावान्प्रवरः । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावाददान आह ॥ २० ॥

बर्हिर्यावन्मात्रम् अन्यया विषयावनीये उत्तिष्ठत्याङ्गिर-मुखोऽपरतः शाखल्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिवत्सशतं[1] प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्या । त्रिवत्सशतं प्रयच्छत्यथापराह्ण अपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । तयोः समाप्तौ यथैतावदेव नाना । अथोत्तरेद्यो निह्नुवते । ऽथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिवत्सशतं दीक्षयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्या । त्रिवत्सशतं दीक्षयति । तदर्धरात्रे प्रयच्छति । ॥ २१ ॥ पञ्चमः ॥

अथाध्वर्युरपराह्ण आवृत्य षड्ग्रावि द्विवत्सशतं दीक्षयतेति[2] । प्रातरुदित आदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । रजाग्रयामच जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विवत्सशतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्या । द्विवत्सशतं प्रयच्छति । स आहवनीयाद्दिवाग्रे षट् प्राचः प्रक्रमान्प्रक्रामति । तच्छङ्कुं निहन्ति । स शालामुखीयः शङ्कुः । शालामुखीयाच्छङ्कोः षट्त्रिंशत्प्राचः प्रक्रमान्प्रक्रामति । तच्छङ्कुं निहन्ति । स यूपावटीयः शङ्कुः । शालामुखीयाच्छङ्कोः पञ्चदश दक्षिणा प्रक्रमान्प्रक्रामति पञ्चदशोदीचस्तच्छङ्कू निहन्ति । ते श्रोणी । यूपावटीयाच्छङ्कोर्द्वादश दक्षिणा प्रक्रमान्प्रक्रामति द्वादशोदीचस्तच्छङ्कू निहन्ति ।

---

1 Here and elsewhere F and the Mantramālā write त्रिवत्सं शतं, द्विवत्सं शतं etc.; all the other MSS. and Koś. write one word.

2 T ins. अथ ।

तावꣳसावथैनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति। पृष्ठ्यामातनोति। यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति। तच्छङ्कुं निहन्ति। स मध्यम औत्तरवेदिकः शङ्कुर्मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा क्षुद्रपदानि प्रक्रामति पञ्चोदञ्चि। तच्छङ्कू निहन्ति। ते श्रोणी। यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि। तच्छङ्कू निहन्ति। तावꣳसावथैनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति। पृष्ठ्यामातनोति[1]। मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यꣳ षट् प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं। तत्पदं निदधाति। स उपरवाणां कालो। ऽथ महावेद्या उत्तरादꣳसीयाच्छङ्कोर्वेद्यन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं। तदाग्नीध्र उपसीदति। स उत्करस्य कालो। ऽथोपरवाणां कालात्स्तम्बयजुर्हरति। ॥ २२ ॥

इदमेव प्रसिद्धं पौरोडाशिकं। स्त्रिर्यजुषा तूष्णीं चतुर्थं। पूर्वं परिग्राहं परिगृह्णाति। करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीꣳ रुद्रवतीमादित्यवतीं विश्वदेव्यावतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदित्युद्धन्त्युद्धृतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण शालां तिष्ठन्संप्रैषमाह वेदिकारा वेदिं कल्पयत प्र स्थलानि भिन्दत प्रति निम्नान्पूरयत किꣳशारूणि निरस्यत प्राचीमुदीचीं प्रवणां निस्तिष्ठतेति। यथासंप्रैषं ते कुर्वन्त्यथ महावेद्या उत्तरादꣳसीयाच्छङ्कोर्वेद्यन्तेन

१ BJT om. these two words.

चीष्मतीर्थः प्रक्रमान्प्रक्रामत्युदङ् चतुर्थं । तथात्वाऽऽस्याहृता शालायां परिश्रित्योत्तरवेदेराहृतोत्तरवेदिं निवपत्युत्तरनाभि-मुत्पाद्याथैनां प्रतिच्छाद्यापराह्णिकीभ्यां[1] प्रवर्ग्योपसद्भ्यां प्रचर-त्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां । द्विस्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । ॥ २३ ॥ षष्ठः ॥

अथाध्वर्युरपररात्र आहुत्य सꣳग्रास्येकस्तनव्रतं दोहयतेति । प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । हराग्रयामश्च जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्म-ण्यामर्धस्तनव्रतं प्रयच्छत्यथ तदानीमेवापराह्णिकौ[2] प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य[3] संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रति-प्रस्थातः प्रवर्ग्यस्याहृता प्रवर्ग्यꣳ सꣳसादयोद्वासनायेति । येऽधैतत्पदं कुर्वन्ति । गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधत्यथ प्रवर्ग्यस्याहृता प्रवर्ग्यमुद्वासयत्यग्नेराहृताग्निं प्रणयत्यग्नि-वत्युत्तरं परिणाहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्येतावान्संप्रैषो । इध्मे-नैतद्बर्हिरनुसन्ध्यꣳ मृणाति महद्वै तद्देवेभ्याबर्हिरग्नीषोमीयाय पशवे परिग्रयौतेत्येक आङ्गरंयाश्वैते अनग्नौ प्रचालिते प्रपन्ने

---

1 After °च्चाय B ins. चपरांश ।

2 °पराह्णिके BH Keś.

3 Thus JF, Bh., Keś.; समस्यमानोप° the other MSS.

योप्यहते अभितः शालां निहतस्तयोर्दक्षिणं वर्षीय उत्तरꣳ ह्रसीय उद्धूतपक्षकं दक्षिणमनुद्धूतपक्षकमुत्तरं तयोर्दक्षिणे वहुं तदवयत्यथैने अन्तर्वेद्यभ्यावर्तयन्त्यथापेण[1] शालामरत्निमात्रमभित अन्वाꣳ स्थापयित्वाथैने प्रोक्षति वैष्णवी विष्णवे शुन्ध्येथामित्यथाहैहि यजमानेति पूर्वया द्वारा शालां प्रपाद्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ यावत्याज्यस्थालीꣳ सस्रुवाꣳ स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानोऽनूची पत्नी पद्धतीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हविर्धानस्य पश्चादक्षमुपस्पृश्य दक्षिणस्यां वर्तन्याꣳ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे स्वाहेत्यथैतेषां पदपाꣳसूनामर्धानाज्यस्थालावावपत्यथैनाꣳस्स्रुवेणाभिघारयति सा प्राचीनानेन पाणिना दक्षिणमक्षधुरमुपानक्त्या नो वीरो जायतां कर्मण्यो यꣳ सर्वेऽनुजीवाम यो बहूनामसद्वशीत्यपरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चादक्षमुपस्पृश्योत्तरस्यां वर्तन्याꣳ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय

---

1 Thus TF; comp. xv. 22 (आपर्णे॰); the other MSS. चाक्षपर्णं यन्ति।

हविर्धानस्योत्तरतो मेथीं निहन्त्यथैनाᳲ रास्नया यूपमिवद्धा-मुपनिबध्नात्येतेनैव मन्त्रेणाथाध्वर्युर्दक्षिणस्य[1] हविर्धानस्य धुर-कात्प्राञ्चमरत्निं मीत्वा लोके[2] न्यस्य गर्तं खानयत्यथ दक्षिणा-द्युगान्तात्प्राञ्चं बाहुं मीत्वा लोके[2] न्यस्य गर्तं खानयति । तावुभावुत्तरेणान्यं गर्तं खानयत्येवमेव प्रतिप्रस्थातोत्तरत-स्त्रीन्गर्तान्खानयत्येवमपरतस्तेषु प्राचीनकर्णा स्थूणा उच्छ्रयन्ति । तासूदञ्चौ वंशौ प्रोहन्त्यध्यस्यन्ति पुरस्ताद्रराटीं विष्णो रराट-मसीति । विष्णोः पृष्ठमसीति मध्यमं छदिरधिनिदधाति । विष्णो स्नप्त्रे[3] स्थ इति ये अभितो भवतो । दक्षिणतश्चोत्तर-तश्च परिश्रयन्ति । प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भणं प्रवयति दर्भेण स्यन्द्यां विष्णोः स्यूरसीति । विष्णोर्ध्रुवमसीति ग्रन्थिं[4] करोति[4] । तं तदानीमेव विस्रस्याशाकुर्वन्तो ग्रन्थीन्हस्तकौशलैर्निस्तिष्ठतेत्येव-मेवोत्तरं द्वार्बाहुमेवमपरे[5] द्वार्बाहू निस्तिष्ठत्यथैनदभिमृशति[6] वैष्णवमसि विष्णवे त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य

१ चाध्वर्युर् om. JHF.

२ Thus all.

३ Thus BHF, Keś. ( pr. m. ); स्नप्त्रे T, Prayogamālā; the visarga of विष्णोः is omitted by all the MSS. exc. H.

४ ग्रंथीकरोति B.

५ चापरे BTHJP ; चापरौ F.

६ Thus ( •ष्ठत्य• or •ष्ठंत्य• ) all, except B, which has निस्तिष्ठतो ( comp. Keś. : कुर्वतः ) — चाथैनद• HF; चाथैनम• BTJP ( Bh., Keś. : चाथैतद्धविर्धानमभिमृशति ) ।

प्राचामुदीचीयाच्छ्रोणेरनुसन्धाय षट् प्राचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं । तदभ्रिं निदधाति । स औदुम्बर्यै काल । औदुम्बर्यै कालादभ्रिमादत्ते ॥ २५ ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तयौदुम्बर्या अवटं[1] परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथोद्गातारमाहोद्गातरेतौममौदुम्बर्या अवटं[2] खन प्राक् पुरीषमुद्वपतादिति । तꣳ स खनति वा खानयति वा । सो ऽत एव सदो विमिमीते । यथा त्रीणि छदीꣳषि तिर्यञ्च्येवं प्राग्ग्रो । यथा त्रीणि छदीꣳष्यन्वञ्च्येवमुदग्ग्रो । ऽपि वा यथा द्वौ भागावुदक् स्पन्द्यायै स्यातामेको दक्षिणत इति । तस्य विश्रेणिगर्तान्खानयति[3] । सो ऽत एव प्राङ् द्रुत्वा[4] दक्षिणस्य हविर्धानस्य पुरो ऽक्षमुपरवान्विमिमीते प्रादेशमुखान्प्रादेशान्तस्यादानथोन्नेतारमाहोन्नेतरेतौमानुपरवा-

---

१ Thus only B; all the other MSS., here and infra, l. 9, औदुम्बर्यावटं, the second time also the Mantramālā.

२ Comp. note १.

३ Uncertain reading. विश्रेणी॰ B; चौश्रेणि॰ H; चौचौश्रेणि॰ T; चौणि॰ JF; विश्रेणि॰ P; comp. Padārthanirv. p. 310 ( No. 174. ). Keśavasvāmin glosses : तस्य सदसः मर्तपङ्क्तीश्च खानयति । Read : चौश्रेणि॰ ?

४ BH ins. चध्वरं ; Keś. has not read the word, as he glosses : सो ऽध्वर्युः सदसः प्राच्यां etc.

पितृषदनꣳ सदनमसीत्यथैनद्धिरण्यमन्तर्धाय¹ स्रुवाज्येनाभिजुहोति पितृभ्यः स्वाहेत्यथैनामुच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳहेत्यथैनां प्राचीनकर्णां मिनोति द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्यथैनाꣳ संदृश्य पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति । मेथान्तर्दण्डेन संदृꣳहन्ति ब्रह्म दृꣳह क्षत्रꣳ दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यन्यूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीयाथाश्वे विशाखे हिरण्यं निधाय स्रुवाज्येनाभिजुहोति घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहेत्योत्तममन्ववधाययत्योत्तममेव यजमानं तेजसानक्तीति प्राग्वंशमेनामुद्गृह्णन्त्यः प्राङ्संस्थां तन्वन्ति यत्र विहरेत्तस्या उच्छ्रयणमनु प्राचीनकर्णां स्थूणा उच्छ्रयन्ति । तासूदीचो वꣳशान्प्रोहन्त्यध्यस्यन्ति मध्यमं छदिरिन्द्रस्य सदो ऽसीति । विश्वजनस्य छायेति ये अभितो भवतो । संवच्छदिं तेजस्कामस्य मिनुयादिति । चौणिचौणेव सर्वाणि भवन्ति² । दक्षिणान्युत्तराणि करोति । स दक्षिणानि³ दक्षिणान्येवोत्तराणि करोत्यन्तर्वर्तान्करोति व्यावृत्त्यां इति । सन्धिषु तृणानामग्रमत्यस्यति⁴ । ते ऽन्तर्वर्ता । अथैनत्परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो

---

१ ॰धाय॰ all, also Keś, except B, which has ॰धेन॰, but comp. page 170,11.

२ Thus BT ; करोति the other MSS. also P.

३ Thus BHJP ; दक्षिणा TF.

४ तृणानाम् or ॰णामि BJTH ; तृणांश्चेषि FP.

इन्द्रायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इति। दक्षिणतश्चोत्तरतश्च परिश्रयन्ति। प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशस्तम्बमुपनिगृह्य दर्भेणं प्रवयति दर्भेण सम्यामिन्द्रस्य स्यूरसीतीन्द्रस्य ध्रुवमसीति ग्रन्थिं करोति। तं तदाग्नीध्रमेव विस्रस्याहाकुर्वन्तो ग्रन्थीन्स्यूतकौशस्त्रैर्निस्तिष्ठतेत्येवमेवोत्तरं द्वार्बाहुमेवमपरे[1] द्वार्बाहू निस्तिष्ठत्यथैनदभिमृशत्यैन्द्रमसीन्द्राय त्वेत्यथ महावेद्या उत्तरादꣳसीयाच्छ्रोणेर्वेद्यन्तेमाष्टादश प्रतीचः प्रक्रमान्प्रक्रामति। तदाग्नीध्रागारं विमिमीते यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धमथैनत्सम्मुच्छ्रित्य परिश्रयन्ति। तस्य दक्षिणां द्वारं कुर्वन्त्याग्नीध्रागारस्य पार्श्वमानो पश्चादग्निरेतेन मार्जालीयो व्याख्यातस्तस्योदीचीं द्वारं कुर्वन्ति।

॥ २७ ॥ सप्तमः ॥

अथात्रैव तिष्ठन्त्याचत्यग्निं यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीꣳ स्रुवामधिषवणं चर्माधिषवणे फलके षट् शङ्कूꣳग्रावाणꣳ हिरण्यमुदपात्रमित्येतत्समादायाह्येहि यजमानेति। पूर्वया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य नीड एतच्चर्मोत्सादयति। पुरोऽक्षमितराणि सꣳसादयन्त्यथोपरवाणां[2] कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरसीति। तथोपरवान्परिलिखति पूर्वयोर्दक्षिणमेवाग्रे परिलिखितꣳ रक्षः परिलिखिता

---

१ वपरौ again (as p. 186) F only; the other MSS., also P, वपरे।

२ सꣳसादयन्त्य° BTJP; °दयत्य° the other MSS.

अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीति सर्वानेवानुपूर्वं खनति रक्षोहणो वलगहनो वैष्णवान्खनामीति सर्वानेवानुपूर्वमर्थेभ्यः पाꣳसूनुद्वपतीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो यो ऽसमानो ऽरातीयति गायत्रेण छन्दसेत्यवबाढो वलग इति यजमानस्याधस्तात्पाꣳसूनुद्वपति पूर्वयोर्दक्षिणस्मिंस्त्रैष्टुभेन छन्दसेत्यपरयोर्दक्षिणस्मिञ्जागतेन छन्दसेत्यपरयोरुत्तरादानुष्टुभेन छन्दसेति पूर्वयोरुत्तरादथैतान्पाꣳसूनसंचरे परावपत्यथ यं यजमानो द्वेष्टि तं मनसा ध्यायन्नथाप उपस्पृश्याथैनानवमृशतो ऽध्वर्युश्च यजमानश्च पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशत्युत्तरं[1] यजमानो ऽथ यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमिति तन्नौ सहेत्यथाध्वर्युः पृच्छति यजमान किमत्रेति भद्रमिति तन्नौ सहेति यमेवाध्वर्युः प्रजहाति तं यजमानो ऽवमृशति दक्षिणयोरपरमेवाध्वर्युरवमृशति पूर्वं यजमानो ऽध्वर्युरत्र पृच्छत्यथ यजमानो ऽपरयोरुत्तरमेवाध्वर्युरवमृशति दक्षिणं यजमानो यजमानो ऽत्र पृच्छत्यथाध्वर्युरुत्तरयोः पूर्वमेवाध्वर्युरवमृशत्यपरं यजमानो ऽध्वर्युरत्र पृच्छत्यथ यजमानो यजमान. प्रथमः पृच्छति यजमान उत्तमो ऽथैनानभिमृशति विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा

---

1 Here and infra F अभिमृशति instead of अवमृ॰ ।

विष्णोरराडसि विष्णोः श्नप्त्रे स्थेति सर्वानेवानुपूर्वमन्वेतानद्भिः प्रोक्षति रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति सर्वानेवानुपूर्वमथैनमो ऽवनयति रक्षोहणो वलगहनो ऽवनयामि वैष्णवानिति सर्वेष्वेवानुपूर्वमथैषु यवान्प्रस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति सर्वानेवानुपूर्वमथैनान्बर्हिषास्तृणाति रक्षोहणो वलगहनो ऽवस्तृणामि वैष्णवानिति सर्वानेवानुपूर्वमथैनान्घिरवमाघार्य जुह्वाऽत्यभिजुहोति रक्षोहणो वलगहनो ऽभिजुहोमि वैष्णवान्स्वाहेति सर्वानेवानुपूर्वमथाधिषवणे फलके दीर्घसोमे संहते भवतो ऽसंहते एकाहे । ते संस्पृष्टे[1] उपदधाति रक्षोहणौ वलगहनावुपदधामि वैष्णवौ इत्यथैने शङ्कुभिः परिणिहन्ति द्वाभ्यां पुरस्ताद्द्वाभ्यां पश्चाद्द्वाभ्यामभितो ऽनवसर्पणायाथैने मृद्विषं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवौ इत्यथैने बर्हिषा परिस्तृणाति रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवौ इत्यथैने अभिमृशति रक्षोहणौ वलगहनौ वैष्णवौ इत्यथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[2] यत्र प्रतितिष्ठेति[3] वा तूष्णीं वा । तिरश्चर्मफलके ग्राव्णो वादयति ॥ २८ ॥

बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति । बौड

१ संहते BTF Keś., Mādh. Vol. I., p. 459; संस्पृष्टे HJ; Bhav. seems to have read संस्पृष्टे ।

२ Thus PHJF, Keś., Mādh.; वास्तृणाति B; चवस्तृ० T.

३ Thus HTF, Bh., Keś.; प्रतिष्ठेति BJP.

## ERRATA.

| | | | | | | |
|---|---|---|---|---|---|---|
| P. | xi. | l. 5. | r. | The quotations. | | |
| P. | xii. | l. 38. | r. | r. | i. s. o. | v |
| P. | xii. | l. 42. | r. | not always. | | |
| P. | 44. | l. 3. | r. | सर्वं | i. s. o. | सर्वं |
| P. | 129. | l. 18. | r. | •वर्हिषद• | | |
| P. | 130. | n. ४ | r. | प्रष• | i. s. o. | प्रर्ष |
| P. | 145. | l. 10. | r. | प्रदक्षिणं | i. s. o. | पदक्षिणं |
| P. | 168. | l. 5. | r. | वषट्कृत | i. s. o. | वषड्कृत |
| P. | 178. | l. 18. | r. | चतुर्हो• | i. s. o. | च तुर्हो• |
| P. | 187. | l. 11. | r. | प्राकृश्रो | i. s. o. | प्रकृश्रो |
| P. | 190. | l. 11. | r. | नक्षोदीर्चं | i. s. o. | नक्षोदी |
| P. | 204. | n. २ | r. | TS. III. 5. 8. b. | | |
| P. | 218. | n. १. | r. | r | i. s. o. | y |
| P. | 223. | l. 8. | r. | दिक्षुर्चोति | | |
| P. | 235. | n. ३ | r. | चर्योक्षा• | | |

एतस्मात्सोमोऽन्नाद्भवति । ग्रावस्तु ग्रावाणमपवर्त्य दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं बर्हिर्मुष्टिमुपनिबध्नाति लोकेभ्यो ऽथ याचति स्फ्यमुद्यामं चात्वालात्पुरीषꣳ सिकता इत्येतत्समादायाहैव यजमानेत्याग्नीध्रं हुत्वा स्फ्येनोद्धत्यावोक्ष्य चात्वालात्पुरीषꣳ सिकता इति निवपति विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिꣳसीरिति । तं परिमण्डलं धिष्णियं[1] करोत्यथैनꣳ सिकताभिराभ्याग्निनं करोत्यथातः-सदसं धिष्णियान्निवपति होतुः प्रथमं वह्निरसि हव्यवाहन इति । श्वात्रो ऽसि प्रचेता इति दक्षिणतो मैत्रावरुणस्य । तुथो ऽसि विश्ववेदा इत्युत्तरतो ब्राह्मणाच्छꣳसिन । उशिगसि कविरित्युत्तरतः पोतुरङ्घारिरसि बम्भारिरित्युत्तरतो नेष्टुरवस्युरसि दुवस्वानित्युत्तरतो ऽच्छावाकस्याथ दक्षिणे वेद्यन्ते मार्जालीयं धिष्णियं[2] निवपति शुन्ध्यूरसि मार्जालीय इति । सर्वेष्वेव रौद्रमनुवर्तयत्याग्नीध्रे ऽन्ततो निवपत्युदक्सꣳस्थाताया इत्यष्टौ न्यवाप्सीदित्यथाष्टावनुदिशति । समाडसि कृशानुरित्याहवनीयमुपतिष्ठते । परिषद्यो ऽसि पवमान इत्यास्तावं । प्रतक्वासि नभस्वानिति चात्वालमसंमृष्टो ऽसि हव्यसूद इति पशुश्रपणमथ सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठत ऋतधामासि सुवर्ज्योति-

---

१ Instead of धिष्णियं ( thus PBT Keś. ) HF have धरं, J धिष्ण्य धरं ; the word धिष्णिय is found here and infra often written धिष्ण्य ।

२ om HJF.

रिति । अग्नेर्ज्योतिरसि सुवर्गामेति अग्नेः सदनमथात्रैव तिष्ठ- न्गार्हपत्यमुपतिष्ठते ऽजो ऽस्येकपादित्यहिरसि बुध्निय इति यं प्रत्याक्रान्तो भवन्ति । ॥ २९ ॥

अथात्रैव तिष्ठन्संप्रैषमाह स्तृणीत बर्हिः प्र प्रतं यच्छत समपिग्रताच्छयध्वमाखायं यजमानꣳ स्तृणीत सदोहविर्धाने यजमाने स्तृणीतोत्तरेणाग्नीध्रं वायव्यानि द्रोणकलशं दशापवित्रे समवधाय पत्नीशाले गꣳ शादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहरेति । यथासंप्रैषं ते कुर्वन्त्यथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिꣳ स्तृणाति देवबर्हिरूर्णम्रद- सं त्वा स्तृणामि स्वासस्थं देवेभ्य इति । तां यजमानः पुरस्ता- त्प्रत्यञ्च[1] स्तृणन्तो यन्त्यथान्तःपात्रं पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उत्प्रदाय ब्रह्मणे राजानमुत्प्रयच्छति । तं ब्रह्मादा- योत्तरत[2]स्तिष्ठत्युत्तरतस्तिष्ठन्नग्निमन्वानयत्युदग्ने[3] तिष्ठानु मामु- देहि विश्वैर्देवैर्यज्ञियैः संविदानः । सुवर्गे लोके यज- मानꣳ हि धेहि माख्ये[4] स्वाहा आज्यत्ये यामुपेम इत्यथा- भ्यादधातीध्मं[5] प्रणयनीयमुपोपयमनीः कल्पयन्ति शालाशा- लांसमन्वारब्धेष्वपिग्रतेषु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय

---

१ Thus TH; प्रत्यंचः PJF; प्रत्यंचꣳ B.

२ तिष्ठत्युत्तरतस् om. TJF; according to the Prayoga and the Vivaraṇa it is to be read.

३ °न्वानयत उद° PH; the Ṛc seems not to be found in any known Saṃhitā.

४ Corrected, माखेत्याखा MSS.

५ Thus TP; अथादधा° F; अथाभ्यादधा° the other MSS.

स्रुचि चतुर्गृहीतं गृहीत्वा प्राजहितीये वैसर्जनानि जुहोति त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्यो ऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहेति । स्रुवेणाप्तुं प्रस्कन्दयति जुषाणो अप्तुराज्यस्य वेतु स्वाहेत्यथापरं चतुर्गृहीतं गृहीत्वा संप्रैषमाहाग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति । त्रिरनूच्यायामनुप्रयन्ति[२] । होतुर्वंशं यजमानस्य वे भवति प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनाꣳसि प्रवर्तयन्तीति[३] । यदस्याच ग्रस्तं भवति पूर्वं तेनाग्निमन्वञ्चत्यर्थयाग्निप्रथमाः प्रतिपद्यन्ते ऽथयाज्ञा पाश्चैस्ताभ्यग्नावपो[४] वायव्यानि । पूर्वया द्वारोपनिष्क्रामन्त्ययं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसातावित्युत्तरेण सदः परीत्याग्नीध्रागारे ऽग्निं निधाय नयवत्यर्चाग्नीध्रे जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथैवैतत्पात्रीवायव्यꣳ[५] समुपसाद्योपातियन्ति राजा पाश्चैस्ताद्धविर्धानीये ध्रुवाहुतिं जुहोत्युरु विष्णो

१ ॰वर्जंनं BTJ; but comp. TS. VI 3. 2

२ ॰अनूच्यायाम॰ BF.

३ इति om BTJ; ॰प्रवर्तयन्त्यथ यदस्या॰ T.

४ Thus F; the other MSS. पाणो ।

५ Thus BJHP; पात्रीवायव्यत्॰ T; पात्रीवायव्यां F; पात्रीवायव्यानि Keś. The remarkable पात्रीवायव्यम् occurs several times in the Karmānta sūtra. The Pronoun एतत् seems also to point to a neuter; but comp. Bh. and Keś: एतद्धि द्रोणकलशमुपपत्त्यर्थम् ।

विक्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति' ॥ १० ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति' वेदिं प्रोक्षति' बर्हिः प्रोक्षति' बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति' पञ्चविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैक्षवी विधृती तिरश्ची सादयति' विधृत्योराश्ववालं प्रस्तरं' प्रस्तरे जुहूं' बर्हिषीतरा' एता असदन्निति समभिमृश्याथाप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदमित्यथ दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणात्यदित्याः सदो ऽस्यदित्याः सद आसीदेति कृष्णाजिने राजानमथैनं देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभदिति' संप्रदायोपतिष्ठत एतत्त्वꣳ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्सह प्रजया सह रायस्पोषेणेति' नमो देवेभ्य इति प्राञ्जलिं करोति' स्वधा पितृभ्य इति दक्षिणा[1] न्यञ्चत्यथोपनिष्क्रामतीदमहं निर्वरुणस्य पाशादित्यथाहवनीयमुपतिष्ठते सुवरभिविख्येषं वैश्वानरं ज्योतिरित्यथ यजमानमवान्तरदीक्षां विसर्जयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनꣳ सꣳस्त्रावि

1 Thus BJ, Bh.; हविर्धानमंथयोप॰ H. हविर्धमंथीत्याथोप॰ F; हविर्धं-कान्याथयोप॰ T; हविर्धानंथयोप॰ P.

सवीय मेखलां प्र मुष्टी धारय मैत्रावरुणाय कृष्णं प्रयच्छ यजमान इति स्वाचवतीं नामयाहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुमनस्यः सुमनस्यामाक्रयणमिति स एवमेवैतत्सर्वं करोत्यथ यूपाहुतिं हुत्वा यूपं यजुषा करोति यूपावटं यजुषा करोति तदेतद्यूपावटान्तम् ॥ ३१ ॥ अष्टमः ॥

अथ यूपस्याहुता यूपमुच्छ्रयति स्वर्धन्तं यूपमुच्छ्र्याग्नीषोमीयं पशुमुपाकरोति तस्य प्रविद्धं वपया परित्वा वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते ऽथ यो दीक्षितः कुम्भस्तं याचति तमादायान्तरेण चात्वालोत्करावुदङुपनिष्क्रम्य यत्रापस्तद्यन्ति[1] मान्तमा वहन्तीरत्येति न स्थावराणां गृह्णाति प्रतीपं तिष्ठन्गृह्णाति छायायै चातपतश्च संधौ गृह्णाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माँ आविवासति हविष्माँ अस्तु सूर्य इत्यथैना आदाय प्रदक्षिणमावृत्य अप्ये ऽंसे निधायैतेनैव यथेतमेत्योत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमौपसदायां वेद्याँ सःस्पृष्टाः[2] सादयत्यग्नेर्वो ऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्तेत्यथ पशुपुरोडाशं निर्वपतीडान्तः पशुपुरोडाशः संतिष्ठते पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येके ॥ ३२ ॥ नवमः ॥

१ यन्ति only T and Madh.; यचन्ति the other MSS. also P and Keś..

२ Some of the MSS. have here and elsewhere संस्पृष्टाः।

अथ वसतीवरीः परिहृत्याह अपक्रामत मा वो
ऽभिपरिहार्षमिति[1] यजमानायतने यजमान उपविशति[1]
अथानेन गार्हपत्यं पत्न्यैना आदाय दक्षिणया द्वारोपनिष्क्रम्य
सव्ये ऽंसे निधाय दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं
धिष्ण्यं पर्याहृत्य दक्षिणतो यूपेन संस्पृष्टाः सादयन्तीभ्या-
ग्नीषोमीयभागधेयौ स्थेत्यथैना आदायोदङ्ङाहृत्य दक्षिणे ऽंसे
निधायैतेनैव यथेतमेत्य अथानेन गार्हपत्यमौपसदायां वेद्यां
संस्पृष्टाः सादयति मित्रावरुणयोर्भागधेयौ स्थेत्यथैना आदाय
पूर्वया द्वारोपनिष्क्रम्य दक्षिण एवांसे निधायोत्तरेण सदः
परीत्योत्तरेणाग्नीध्रीयं धिष्ण्यं पर्याहृत्योत्तरतो यूपेन १०
संस्पृष्टाः सादयति विश्वेषां देवानां भागधेयौ स्थेत्यथैना
आदाय प्रदक्षिणमाहृत्य सव्ये ऽंसे निधायैतेनैव यथेतमेत्य
अथानेनाग्नीध्रीयं धिष्ण्यꣳ संस्पृष्टाः सादयति यज्ञे
जाग्रतेति[1] ॥ ३३ ॥

अथ पयांसि विश्रासि या नसाम्धुक् तस्यै दधिघर्माय ११
दधि कुरुत या यजमानस्य तस्या आमिक्षायै या पत्न्यै तस्या
आशिरे पयश्च मस्तु च कुरुत प्रातस्त्वमादित्यपात्राय दधि
कुरुत पुरोडाशीयानि पिष्टानि कुरुत धाना हारियोजनीः
कुरुत चतुरो 'ऽश्वाणांस्तौनुदक्षनामयुज[2] एकधनांश्चायवमाने-

1. Most of the MSS. read ०रीषध० ।

2. Thus PHBJ, Bh., Mantramālā, Ke⁴ ; बर्हिषाम् F. Prayoga I.O., Padārthanirv ; बस्थाम् T.

अथातो महाराज एव युञ्जते । संप्रेष्यत्येतानृत्विजो ऽध्वर्युꣳ होतारं ब्रह्माणमुद्गातारं प्रतिप्रस्थातारं प्रस्तोतारं प्रशास्तारं ब्राह्मणाच्छꣳसिनमच्छावाकं नेष्टारं पोतारꣳ सदस्यमुन्नेतार-माग्नीध्रं ग्रावस्तुतꣳ सुब्रह्मण्यं प्रतिहर्तारं ये चान्ये परिकर्मिणो भवन्ति । ते हस्तपादान्प्रक्षाल्याग्नीध्रे यजमानमुपसंगच्छन्ते । ऽथाध्वर्युर्हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयमित्यथात्रैव तिष्ठन्संप्रैषमाहोन्नेतर्ग्राव्णो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरो ऽक्षꣳ सꣳसादयाग्नीदाज्य-मधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहरेति । यथासंप्रैषं ते कुर्वन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभि-मृशत्यग्निर्मूर्धा दिव इति । वैष्णव्या हविर्धानं विष्णो त्वं नो अन्तम इत्याग्नेय्या स्रुचो ऽयमग्निः सहस्रिण इति । वायव्यया वायव्यानि वायो शतꣳ हरीणामित्यैन्द्र्या सद इन्द्रं विश्वा अवीवृधन्नित्यथ पृषदाज्यवन्त्याज्यानि गृहीत्वा प्रोक्षणीभिरुपो-त्तिष्ठन्नौक्षं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं[1] गृह्णात्येकविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राग्भिस्त्रिभिरौदुम्बराश्वत्थपरिधीन्परिदधाति नित्येन परिधानेनाथैनान्योगेन युनक्ति । युनज्मि ते पृथिवीं ज्योतिषा सहेति मध्यमं । युनज्मि वायुमन्तरिक्षेण ते सहेति दक्षिणं । युनज्मि वाचꣳ सह सूर्येण त इत्युत्तरमथ स्रुचः सचा अभि-मृशति युनज्मि तिस्रो विपृचः सूर्यस्य त इत्यथाप उपस्पृश्याहेहि

१ Behind पुरस्तात् HJ ins. [illegible] ।

यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्याथैतयोः[1] फल-
कयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[2] यच्च प्रतितिष्ठेति वा
तूष्णीं वा । तस्मिन्संमुखान्ग्रावणः कृत्वा दक्षिणस्य हविर्धान-
स्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा सोम
राजन्नेह्यवरोहेति द्वाभ्यामथैनमुद्गृह्याभ्यः प्राङस्तस्मिंस्तावेहन्ति
यत्ते विदुरथाप उपस्पृश्याहेहि यजमानेत्याग्नीध्रं द्रुत्वा स्रुचि
चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याग्नीध्रे जुहोत्य-
न्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाग्नीध्र एवा-
सन्यां जुहोत्यामन्यामा मन्त्रात्पाहि कस्याश्चिदभिशस्त्याः[3]
स्वाहेत्यथाहवनीये घृतानुषिक्तं शकलमभ्यादधाति तूष्णी-
मथात्रैव तिष्ठन्संप्रैषमाह ॥ १ ॥

प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य
सुब्रह्मण्यामाह्वयाग्नीत्सवनीयान्निर्वप प्रतिप्रस्थातः खरे पात्राणि
युङ्क्ष्वेति । यथासंप्रैषं ते कुर्वन्ति । प्रतिपद्यत एष होता
प्रातरनुवाकं । यच्छति ब्रह्मा वाचमाह्वयति सुब्रह्मण्यः सुब्रह्मण्यां ।
सुब्रह्मण्यामाहूतायां ब्रह्मा वाचं विसृजते । निर्वपत्येष आग्नीध्र
ऐन्द्राग्नमेकादशकपालं सवनीयांस्तेषां व्रीहिष्वेव हविष्कृतमुद्वा-
दयत्युपोत्तिष्ठन्ते यवानथ प्रतिप्रस्थाता खरे पात्राणि युनक्ति ।

---

१ Thus ( अथैतय॰ ) Keś.; अथैनय॰ the MSS.

२ आस्तृणाति B.

३ अभिशस्त्या PBTJ, Mantramālā; ॰शस्त्यै Prayoga IO, Padārtha-nirv.; ॰शस्त्रै H : ॰शस्यै F.

स यन्ता प्रसतीरिषः स्वाहेत्यथ यदुक्त्य एतेनैव यजुषा मध्यमे परिधौ निमार्ष्ट्यथ यदतिरात्र एतदेव यजुर्वेदमपपद्यते। यज्ञक्रतूनां व्याख्या इति ब्राह्मणमथैता षोडशसमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य नीड उत्सादयत्यथो-दुत्तराधवनीयस्य सर्वत्र एव मैत्रावरुणचमसीयाः पर्यस्यति। तृतीयं वसतीवरीणामवनयति। तृतीयमेकधनानां। पुरोऽक्षं वसतीवरीः सादयति। पश्चादक्षमेकधनानथान्तरेण हविर्धाने उपविश्यौदुम्बरं पात्रं चतुःस्रक्ति याचति। तस्मिन्बर्हिषी अन्तर्धाय प्राजापत्यं दधिग्रहं गृह्णात्युपयामगृहीतोऽसि प्रजा-पतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्य इत्यपोद्धृत्य बर्हिषी अथैनमादायोपो-त्तिष्ठति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति। पूर्वया द्वारोप-निष्क्रामत्यपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहीत्यथाहवनीये जुहोत्यन्वारब्धे यजमाने प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वाद्भ्यस्त्वौष-धीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा[1] अजायन्त

---

१ Conjecturally. The best MSS. (BJ) and the Mantramālā read अख्खिद्रा which seems to mean: akhkhidrā, thus P. By adding a little stroke we get the reading I have put in the text, on account of the usual form the verb खिदति has in the Taittirīya texts ( खिद्यति ). Comp. TS. III. 5, 8, C.

तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहेत्यथास्य संज्ञानमन्तःपरिधि निनयति। धेनुवरं[1] वानडुद्वरं वा दद्यादिति ह स्माह बौधायनो। दारुम यक्षौ हौरित्याश्मौगविर्कर्षभमिति कात्यो। मणिकुण्डलमिति राथीतरः। ॥ ४ ॥ प्रथमः ॥

अथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य[2] चर्मणि निदधाति। तासु निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुत आयुर्मे तर्पयतेति प्रतिपद्य गणा मे मा वितृषन्नित्यातस्ता यजमानाय संप्रदायाथैतेषां ग्राव्णां यः स्थूलतम इव तमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमित्यथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपांशुसवनमभि मिमीत इन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वादित्यवत इन्द्राय त्वा विश्वदेव्यावत इति। पञ्चकृत्वो यजुषा। पञ्चकृत्वस्तूष्णीं। दशकृत्वो मिमानो ऽर्धवेलाꣳ राज्ञो मिमीते। ऽथातिशिष्टꣳ राजानमुष्णीषेण विपथ्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य[2] नीड उत्सादयत्यथ मितꣳ राजानꣳ होतृचमसीयाभिरुपसृजति श्वात्रा स्थ वृत्रतुरो

१ धेनू॰ H, but comp IV. 11 (page 127, 14).

२ Thus BJTF; उपावहृत्य H.

राधीगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबत्वित्यथैनꣳ संमृशति यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोच इति । तिरश्चमंसलाभ्यां अभिमृशति धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टमित्यथ सुष्ठीर्वाप-यत्यवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताꣳ सवनाय सोम-मिति । संप्रमस्य राज्ञः प्रतिप्रस्थाता सव्ये पाणौ पञ्चꣳशूर्पमपते ऽथैतेनैव पाणिनोपाꣳशुपात्रमादत्ते ऽथोपसृष्टꣳ राजानमष्टौ कृत्वो ऽथ ऽभिषुणोति । सो ऽꣳशौ स्कन्नं वाचयत्या मास्का-न्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरि-त्यथाञ्जलिनोपहन्ति । तूष्णीमन्तर्दधाति प्रतिप्रस्थाता । प्रथमा-भ्यामꣳशुभ्यामानयत्यध्वर्युर्वाचस्पतये पवस्व वाजिन्निति । अथ एतावꣳशू । तथोपसृष्टꣳ राजानमेकादशकृत्वो द्वितीयमभिषु-णोति । तथाꣳशौ स्कन्नं वाचयति । तथाञ्जलिनोपहन्ति तूष्णीमेवान्तर्दधाति प्रतिप्रस्थाता । मध्यमाभ्यामꣳशुभ्यामानय-त्यध्वर्युर्देवा वृष्णो अꣳशुभ्यां गभस्तिपूत इति । अथ एता-वꣳशू । तथैवोपसृष्टꣳ राजानं द्वादशकृत्वस्तृतीयमभिषुणोति तथैवाꣳशौ स्कन्नं वाचयति । तथैवाञ्जलिनोपहन्ति तूष्णी-मेवान्तर्दधाति प्रतिप्रस्थातोत्तमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्देवो

* About the interpunction of this passage I am not sure.

प्रतिप्रस्थातोपसरत आग्नीध्रो ऽन्तरेण प्रतिप्रस्थातारं चाग्नीध्रं च यश्चतुर्थो ऽभिषुणोत्यथोन्नेतारमाहाध्वर्योपसृजेत्युपसृजत्युन्नेताधवनीयादुदञ्चनेनोपर्यर्धे होतृचमसे ऽꣳशून्परिप्लावयन्ति प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब निष्परेत्येष निग्राभ आप्याययन्ति व्यपोहन्ते ऽभिषुण्वन्ति निग्राभमुपयन्त्याप्याययन्ति व्यपोहन्ते ऽभिषुण्वन्ति[1] निग्राभमुपयन्त्याप्याययन्ति व्यपोहन्ते ऽभिषुण्वन्ति[1] न चतुर्थं निग्राभमुपयन्त्यथैनꣳ सुसंभृतꣳ संभरण्याꣳ संभृत्योन्नेत्र उत्प्रयच्छति तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीय ऋजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्र उत्प्रयच्छति तदुन्नेताधवनीये[2] विचाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेषे उपावहृत्य[3] चर्मणि निदधाति तस्मिन्त्संमुखान्ग्राव्णः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहत्यथोद्गाता वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं ग्रावसु द्रोणकलशमत्यूहति तस्मिन्नुदीचीनदशं दशापवित्रं वितन्वन्ति तेन तथा कृतेनादित्यस्योदयमाकाङ्क्षन्त उदित आदित्ये ऽन्तर्यामं गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतो ऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे

१ The passage निग्राभमु ...... ऽभिषुण्वन्ति, found in PHF, is missing in BTJ.

२ Thus JP: तमुन्नेता° TFB.

३ Thus BJTP, उपानिहृत्य H; उपानिहृत्य F.

राज्ञो ऽयं वां मित्रावरुणेत्यनुद्रुत्योपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति । बर्हिषी अन्तर्धाय पयसा श्रीणात्यपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य सादयत्येष ते योनिर्ऋतायुभ्यां त्वेत्यथोपातीत्याश्विनपात्रꣳ शुक्रपात्रमादत्ते । तदेतद्बैल्वं वा पालाशं वा स्रक्त्यं भवति । तेन गृह्णात्यतिपवमानस्य राज्ञो ऽयं वेनश्चोदयदित्यनुद्रुत्योपयामगृहीतो ऽसि शण्डाय त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्वीरतां पाहीत्यथादत्ते मन्थिपात्रं । तदेतद्वैकङ्कतꣳ स्रक्त्यं भवति । तेन गृह्णात्यतिपवमानस्य राज्ञस्तं प्रत्नथेत्यनुद्रुत्योपयामगृहीतो ऽसि मर्काय त्वा जुष्टं गृह्णामीति । बर्हिषी अन्तर्धाय सक्तुभिः श्रीणात्यपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य सादयत्येष ते योनिः प्रजाः पाहीत्यथादत्त आग्रयणस्थालीं । तया गृह्णात्यतिपवमानस्य राज्ञो ये देवा दिव्येकादश स्थेत्यनुद्रुत्योपयामगृहीतो ऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीत्यथैनां[1] त्रिरभिहिङ्करोति ॥ ६ ॥

हिं हिं हिं सोमः पवते सोमः पवते सोमः पवते ऽस्मै ब्रह्मणे पवते ऽस्मै क्षत्राय पवते ऽस्मै त्विषे पवत इषे पवत ऊर्जे पवते ऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते ऽस्मै सुन्वते यजमानाय पवते मह्यमित्युपांꣳशूक्त्वा ज्यैष्ठ्याय पवत

---

१ Thus PH ; त्यथैनं BIT ; त्यथैनत् F ; त्यथैन Koś.

इत्युच्चैरथैनमधिवदत आग्रयणो ऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणेति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्युपब्दिमतो ऽत ऊर्ध्वं ग्रहान्गृह्णाति । पिङ्ग्रस्तयस्य गणिनो रुजन्त इति वृष्णवत्यर्चा भ्रातृव्यवतो गृह्णीयादिति ब्राह्मणमथादत्त उक्थ्यस्थालीं । तया गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतो ऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वोक्थायुव इत्यथादत्ते ध्रुवस्थालीं । स आह ये पूर्वया द्वारा प्रापत्सत[1] प्राञ्चस्ते निष्क्रामन्तु ये ऽपरया प्रत्यञ्चस्ते मा वो ऽभिपरिह्वारिषमिति । जघनेनाभिषोतॄन्सोमोद्रेकानभिपरिहृत्योत्तरत उपयच्छति[2] मूर्धानं दिवो अरतिं पृथिव्या इत्यनुद्रुत्योपयामगृहीतो ऽस्यग्नये त्वा वैश्वानराय जुष्टं गृह्णामीत्यथैनमधिवदते ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमो ऽच्युतानामच्युतक्षित्तम इत्यथैनमथाहृतं[3] प्रतिपर्याहृत्योत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोह्य सादयत्येष ते योनिरग्नये त्वा वैश्वानरायेति । ध्रुवेण राजानं परिदधात्यथोपर्यर्धे द्रोणकलशे परिप्लु पात्रं प्रास्य द्रप्सानगु-

---

१ Thus emended. All MSS also P Bh., Mantramālā, Prayoga 10, Padārthamrv. have प्रापत्स्यतः, only T, K24 प्रापत्स्यमः।

२ Thus PBTH Bh., उपयय० F K24.

३ अथैनं instead of अथनद् T; अथैनंयथाहृतं P (pr. m.), अथैनमथा० P (sec. m).

न्युप्तैर्मन्त्रैः। स यद्यु ह यथान्युप्तमभिजुहोति सप्त त इत्याग्नीध्रे[१]
ऽन्ततो जुहोति। यद्यु वै स्वाहास्वाहेति स्वाहेत्येवान्तत
आग्नीध्रीये[२] जुहोत्युदकमꣳस्वताया इत्यथोत्तरस्य हविर्धानस्य
चुबुके प्रचरणीꣳ सादयत्यथ सांकाशिनेन पथा पृष्ठ्याꣳ स्तृणाति
संततां गार्हपत्यादाहवनीयात्। ॥ ८ ॥ द्वितीयः ॥

अथाध्वर्यू रशनाहस्तौ यूपमभ्येत्योदूह्य पूर्वाꣳ रशनां
नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति। स्वर्वन्तं
यूपमुत्सृज्याग्नेयं पशुमुपाकरोति। समानं कर्मा प्रवरात्प्रसिद्धꣳ
होतारं वृणीते। ऽथाश्रावयत्यो श्रावयास्तु श्रौषडग्निनाध्वर्यू
आध्वर्यवादित्यसौ चामौ च मानुषाविति। प्रतिप्रस्थातुर्नाम
गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषण्मित्रावरुणौ प्रशास्तारौ
प्रशास्त्रादित्यसौ मानुष इति। मैत्रावरुणस्य नाम गृह्णात्यथा-
श्रावयत्यो श्रावयास्तु श्रौषडिन्द्रो ब्रह्मा ब्राह्मणादित्यसौ मानुष
इति। ब्राह्मणाच्छꣳसिनो नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु
श्रौषण्मरुतः पोत्रादित्यसौ मानुष इति। पोतुर्नाम गृह्णात्यथा-
श्रावयत्यो श्रावयास्तु श्रौषड् ग्रावो नेष्ट्रादित्यसौ मानुष इति।
नेष्टुर्नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषडग्निराग्नीध्रा-
दित्यसौ मानुष इत्यग्नीधो नाम गृह्णाति। तेषां प्रवृतःप्रवृत
एव प्रवृताहुतीर्जुहोति। जुष्टो वाचो भूयासमन्हपा स्तोमꣳ
समर्धय स्वर्यो मा देवो देवेभ्यः पात्वित्येताभिरध्वर्यू जुह्वतो।

१ आग्नीध्रीये PBH, comp. VI. 29 (page 193, 14).

२ आग्नीध्रे TJ.

यथावेदमितरे जुह्वत्यथाश्रावयत्यो श्रावयास्तु श्रौषडग्निर्हि[1] दैवीनां विशां पुरएतायꣳ सुम्नयजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳ हिमा द्वा यू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति समानं कर्म वपायै वपया प्रचर्य वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्तेऽथ यजमानमुत्करे स्फ्यविघनानुपस्थापयति ॥ ९ ॥

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः। यज्ञिया यज्ञकृत स्थ ते मास्मिन्यज्ञ उपह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तामित्यथ नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुपतिष्ठते नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमथ प्राङ्गाहृत्य जपति दृढे स्थः शिथिरे समीची माꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहसस्पातु वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्य इत्यथ प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संमृशति देवी द्वारौ मा मा संताप्तमित्यथ सदः प्रपद्यते नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या इत्यथापनाहविःसदसं तृणं निरस्यत्यहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद यो

१ Comp IV. 6 (page 116, 13).

ऽन्तरापाकतर इत्यथैनमुत्तिष्ठत उद्गृह्णन्नेषमित्यथैनं प्राची-
चकै पातं मा द्यावापृथिवी अद्याह्न इत्यथ दक्षिणार्धं परेक्षत
आगन्त पितरः पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं
भूयास्तेत्यथोत्तरार्धं परेक्षत । उदकमꣳसनाया इति । ॥ १० ॥

अथेमावध्वर्यू आहवनीयमभ्युत्क्रम्याहवनीयमुपतिष्ठेते । ५
एवमाग्नीध्रीयमेवꣳ होत्रीयमेवं प्राञ्चावावृत्य जपत । एवं
प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संसृपत । एवꣳ सदः प्रपद्येते ।
एवमासनाभ्यां बहिःसदसं तृणे निरस्यतो । दक्षिणमेवाध्वर्युर्द्वा-
र्बाहुं निश्रयमाण उपविशत्युत्तरं प्रतिप्रस्थाता वमिमे समीक्षेते ।
एवं दक्षिणार्धं चोत्तरार्धं च परेक्षेते । उदकमꣳसनाया इत्यथैने १०
वषट्कर्तार आहवनीयमभ्युत्क्रम्याहवनीयमुपतिष्ठन्त । एवमाग्नी-
ध्रीयं । तमुत्तरेण परियन्त्येवꣳ[1] होत्रीयमेवं प्राञ्च आवृत्य
जपन्त्येवं प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संसृपन्त्येवꣳ सदः
प्रपद्यन्ते । ऽथैव धिष्ण्यानुत्तरेणाक्रम्याक्रम्य[2] धिष्ण्यं परी-
त्यैवमासनेभ्यो बहिःसदसं तृणानि निरस्यन्त्येवꣳ स्वꣳस्वमेव ११
धिष्ण्यमनूपविशन्त्यर्वामिमे समीक्षन्त । एवं दक्षिणार्धं चोत्त-
रार्धं च परेक्षन्त । उदकमꣳसनाया इत्यथैने सर्वं उद्गातारो
ब्रह्मा सदस्य इत्यवषट्कर्तार आहवनीयमभ्युत्क्रम्याहवनीयमुप-
तिष्ठन्त । एवमाग्नीध्रीयं । तमुत्तरेण परियन्त्येवꣳ होत्रीयमेवं

---

१ BF ins. च।

२ All the MSS. read here and infra पर्येति।

प्राञ्च आवृत्य जपन्त्येवं प्रदक्षिणमावृत्योत्तरेण सदः परीत्यैवमपरे द्वारौ सदसः संसृप्यन्त्येवꣳ सदः प्रपद्यन्त एवमासनेभ्यो बहिःसदसं तृणानि निरस्यन्त्यौदुम्बरीमेवोद्गातारः पर्युपविशन्ति दक्षिणत उदङ्मुखो[1] ब्रह्मा सदस इत्युपविशत एवमिमे समीक्षन्त एवं दक्षिणार्धे चोत्तरार्धे च परेक्षन्त उदक्यꣳस्वताया इत्यथैतेषां[2] विसꣳस्थितसंचरो ऽन्तरेण चोतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च ये ऽधिष्णिया अथ धिष्णियवन्तः स्वꣳस्वमेव धिष्णियमुत्तरेणोत्तरेण परियन्ति ते सꣳस्थिते सवने यथाप्रसृप्तमेव विनिःसर्पन्ति ॥ ११ ॥ तृतीयः ॥

संप्रसृप्तान्विदित्वाध्वर्युः सवनीयान्पुरोडाशान्व्याचत्यथैष आग्नीध्रो जघनेन गार्हपत्यमुपविश्य पात्र्यां पञ्चधोपस्तृणीते मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयति पुरस्ताद्धाना दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरतो ऽथैनानि संपरिगृह्य पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याहृत्यान्तर्वेद्यामादयत्यथ जुहूपभृतोरुपस्तृणान आह प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति द्विः पुरोडाशस्यावद्यति द्विर्धानानां द्विः करम्भस्य द्विः परिवापस्य द्विरामिक्षाया अभिघारयति प्रत्यनक्त्ययोपभृति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धादवद्यति

---

[1] Thus HT; ॰मुखो BJFP.

[2] Thus PJBFH Kes.; चथैतां T Bh.

द्विरभिघारयति । स प्रत्यङ्ङत्याक्रम्याश्राव्याह प्रातः प्रातः-सावस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोत्यथ समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा पात्र्यामिडाꣳ समवधाय प्रतीचः पुरोडाशान्प्रहिणोत्यन्तु ह्येके संयन्ति पशव इडेति वदन्तो । ऽथ प्राह्णायणाह वायव इन्द्रवायुभ्यामनुब्रूहीति । तच्छ्रुत्वा प्रतिप्रस्थातैन्द्रवायवस्य प्रतिनिर्ग्राह्यं[1] गृह्णाति द्रोणकलशात्परि-प्लुता पात्रेणादित्यस्थाल्या आग्रयणे पात्र उपयामगृहीतो ऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति । यथावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहा-वादत्त । उत्तरतस्तिष्ठते प्रतिप्रस्थाने प्रतिनिर्ग्राह्यं[1] प्रयच्छत्यथ वै भवत्यैन्द्रवायवमादायाघारमाघारयेदिति । स आज्यस्थाल्याः[2] स्रुवेणोपहत्यैन्द्रवायवमादायाघारमाघारयत्यध्वरो यज्ञो ऽय-मस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरो ऽसि स पिन्वस्व घृतवद्देव सोम स्वाहेत्यथाश्रावयत्यो श्रावयास्तु श्रौषड्वायव इन्द्रवायुभ्यां प्रेष्येति । वषट्कृते ऽध्वर्युः पूर्वो जुहोति । द्वितीयं वषट्कृते सहोभौ जुहुतो । हुत्वा वाचयति यो न

---

1 Here and infra, without y, BJT Bh. (Grantha MS. and Dev. MS.); प्रतिनिर्ग्राह्यं FHP Dvaidha, Kes., Padārthanirv. (F once without y).

2 ०स्था FH; ०स्थाः BT; ०स्थां J.

इन्द्रवायू अभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे संस्रवं सङ्स्रावमवनयत्युभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रे ऽवनयति । तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति देवेभ्यस्त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङ्गायन्नाह मित्रावरुणाभ्यामनुब्रूहीति । तच्छ्रुत्वा प्रतिप्रस्थाता मैत्रावरुणस्य प्रतिनिर्ग्राह्यं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेणादित्यस्थाल्या औपशये पात्र उपयामगृहीतो ऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति । यथावादायोपनिष्क्रामत्युपनिष्क्रामत्येवाध्वर्युर्यथावादत्त । उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छत्यथाश्रावयत्याश्रावयास्तु श्रौषण्मित्रावरुणाभ्यां प्रेष्येति । वषट्कृते सहोभौ जुहुतो । हुत्वा वाचयति यो नो मित्रावरुणावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे संस्रवं सङ्स्रावमवनयत्युभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रे ऽवनयति । तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेदेवेभ्यस्त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङ्गायन्नाहाश्विभ्यामनुब्रूहीति । तच्छ्रुत्वा प्रतिप्रस्थाताश्विनस्य प्रतिनिर्ग्राह्यं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेणादित्यस्थाल्या औपशये पात्र उपयामगृहीतो ऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति । यथावादा-

थोपनिष्क्रामत्युपनिष्क्राम्य स्वैवाध्वर्युर्यथावादत्त उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडश्विभ्यां प्रेष्येति वषट्कृते सहोभौ जुहुतो हुत्वा वाचयति यो नो ऽश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती। इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयत्युभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रे ऽवनयति तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेभ्यस्त्वा देवेभ्य इति ॥ १२ ॥

स यद्यु हैतैः संस्रावैरुपर्यर्धा स्थाली भवत्येतेनैनां पात्रेणापिदधाति यद्यु वै नोपर्यर्धा भवति द्रोणकलशादेनामुपर्यर्धां[1] कृत्वैतेनैव पात्रेणापिदधाति विष्णवुरुक्रमैष ते सोमस्तं रक्षस्व तं ते दुश्चक्षा मावख्यदित्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राञ्चायमाहोन्नीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा तु त्वमुन्नेषाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्बस्वेति यथासंप्रैषं ते कुर्वन्ति द्रोणकलशादेव प्रथममुन्नयन्त्यथ[2] पूतभृतो ऽथ द्रोणकलशात्तं उभयतःशुक्रा होतृचमसमेव प्रथममुन्नयन्ति[3] यथोपपादमितरान्समुन्नीयोत्तरवेद्यां संसादयन्त्यथ[4] प्रतिप्रस्थाता चतुर्णां शकलानां द्वौ

१ Before एनामु॰ BFHP ins. स्व। २ Thus BHTP; ॰यन्त्यथ F.
३ Thus BFHP ॰यन्ति T. ४ Thus BHFP Keś.; सादयन्त्यथ JT.

प्रोक्षति । द्वावप्रोक्षितौ भवतः । प्रोक्षिताभ्यामपिधायाप्रोक्षिताभ्यामुपयच्छतः । शुक्रमेवाध्वर्युरादत्ते । मन्थिनं प्रतिप्रस्थाता । यथावादायोपनिष्क्रामतो । दक्षिणमेवाध्वर्युर्दार्वाङ्गं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता । तौ जघनेनोत्तरवेदिं यन्तौ संधत्त आयुः संधत्तं तन्मे जिन्वतं प्राणꣳ संधत्तं तं मे जिन्वतमपानꣳ संधत्तं तं मे जिन्वतं व्यानꣳ संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतꣳ श्रोत्रꣳ संधत्तं तन्मे जिन्वतमिति । षड्भिः संधाभिः संधाय व्युत्क्रामत । सुतो ऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्तु सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषेत्यध्वर्युर्दक्षिणेनोत्तरवेदिं परिक्रामति । सुतो ऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्तु सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेति प्रतिप्रस्थातोत्तरेणोत्तरवेदिं परिक्रामति । तौ पुरस्तात्प्रत्यञ्चावुत्तरवेदिमभिद्रवत इन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥ यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासमित्यन्तरेण यूपं चाहवनीयं च यन्तौ संधत्त आयु स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राण स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तमपान स्थो ऽपानं मे धत्तमपानं यज्ञाय धत्तमपानं यज्ञपतये धत्तं व्यान स्थो व्यानं मे धत्तं व्यानं यज्ञाय धत्तं व्यानं यज्ञपतये धत्तं चक्षु स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तꣳ श्रोत्रꣳ स्थः श्रोत्रं मे धत्तꣳ श्रोत्रं यज्ञाय

धत्तꣳ श्रोत्रं यज्ञपतये धत्तमिति षड्भिः संधाभिः संधाय व्युत्क्रामतः ॥ १३ ॥

तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यथाप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो निरस्तः शण्डः सहामुनेत्यध्वर्युर्यं यजमानो द्वेष्टि तं मनसा ध्यायति निरस्तो मर्कः सहामुनेति प्रतिप्रस्थाता यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्य प्रोक्षितावभ्याधत्तः शुक्रैषा ते समित्तया समिध्यस्व स्वाहेत्यध्वर्युर्मन्थिन्येषा ते समित्तया समिध्यस्व स्वाहेति प्रतिप्रस्थाता तस्मिन्काले चमसाध्वर्यवश्चमसानुपोद्यच्छन्ते ऽथाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषट् प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेति वषट्कृतानुवषट्कृते द्विर्जुहुतस्तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुह्वत्यथ संप्रेष्यत्याह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तध्वꣳ होतुश्चमसाध्वर्युपरमैहि प्रतिप्रस्थातरुत्तरार्धं आहवनीयस्य मन्थिनः संस्रावं जुहुधीति यथासंप्रैषं ते कुर्वन्त्यथ प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति

वा तूष्णीं वाथ प्रतिप्रस्थातोत्तरार्धे आहवनीयस्य मन्थिनः सꣳस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिꣳ [illegible]थाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनꣳ सादयति। यन्त्येते[1] महर्त्विजां चमसा। अथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तन्ते। तेषां मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति। वषट्कृतानुवषट्कृते द्विजहोति। ब्रह्मन्यज पोतर्यज नेष्टर्यजाग्नीध्रयजेति पर्वहोत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यायेण होतारमुपविशत्ययाडग्नीदिति। स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीत्यथ होतादत्त ऐन्द्रवायवपात्रमात्तमेवाध्वर्युरन्वारभते। ऽन्वारब्धे ऽध्वर्यौ होतोपहवमिष्टा भक्षयति यथा स वेद। तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्टा भक्षयति मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहीत्यथ होता भक्षयत्यथाध्वर्युर्यथेनद्धोत्रे ऽनुषजति। तद्धोता यथायतनꣳ सादयत्यथ होतादत्ते मैत्रावरुणपात्रमात्तमेवाध्वर्युरन्वारभते। ऽन्वारब्धे ऽध्वर्यौ होतोपहवमिष्टा भक्षयति यथा स वेद। तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्टा भक्षयति मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीत्यथैनद्धोत्रे ऽनुषजति। तद्धोता यथायतनꣳ सादयत्यथ होतादत्त आश्विनपात्रमात्तमेवाध्वर्युरन्वारभते।

---

1 Thus (सादयतियंत्येते) PHT and Keś.; the other MSS. सादयंत्येते (B) or सादयत्येते JF.

ऽन्वारब्धे ऽध्वर्यौ होतोपहवमिच्छते भक्षयति यथा स वेद। तथान्वारब्धे होतर्यध्वर्युरुपहवमिच्छते भक्षयति मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीति। सर्वतः परिहारमाश्विनं भक्षयतीति ब्राह्मणमथैनं होत्रे ऽनुषजति। स होता यथायतनं सादयत्यथाप उपस्पृश्य होत इडामुपोद्यच्छन्ते॥ १४॥

उपहूयमानायामिडायामुपप्रस्थाय चमसानुपहूतायामिडायामनाहितमग्नीध्रे भवत्यथैतानि द्विदेवत्यपात्राण्यतिरिक्तानि करोति। पुरोडाशशकलमैन्द्रवायवपात्रे प्राश्नात्यामिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्रे ऽथैनानि संपरिगृह्य पूर्वया द्वारोपनिष्क्रम्यापरया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयति। तान्या तृतीयसवनात्परिशेरे। ऽथाग्नीध्र आदधाति षडवत्तं। प्राश्नन्ति। मार्जयन्त इडोपहूतां चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्य वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्हिन्वन्त एतयात्मानं प्रत्यभिमृशन्त। आप्याययन्ति चमसानाप्यायस्व समेतु त इति। सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधो ऽध[1] ऐन्द्राग्नायाथैषो ऽच्छावाको ऽग्रेण सद आस्ते। तस्मै सहपुरोडाशशकलमादधद्दाहाच्छावाक[2]

---

१ Thus PHJF Bh. Keś.; चवाळंव॰ B; चवा॰ or चपा॰ T (Grantha!)

२ Thus JHFP; चमदच्छ॰ B; चपदचर॰ T.

वदस्व यत्ते वाच्यमिति । स यथाच्छावाकस्याभिज्ञानात्युपो ऽस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमिति तदाह होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्वेति । तम्होता होतोपह्वयते । ऽथ आञ्जयन्नाग्नीध्रीयमाणायानुसूच्छावाकस्य चमसाध्वर्यु- मयस्त्वोभयतःशुक्रं कुरुष्वेति । स तथा करोत्यथ गाक्रत्या- च्छावाकचमसमादायाश्राव्याहाच्छावाक यजेति । वषट्कृतानु- वषट्कृते हुत्वा हरति भक्षं । स यद्यभिमच्छावाक उपहव- मिच्छत उपैवैनं ह्वयते । नो त्वेव संभक्षयतः[1] । सौदत्यस्य नाराशंसं आप्यायितो । ऽथाहाच्छावाक सौद नेष्टः पत्नीमु- दानयाग्नीदच्छावाकं मे सन्नं प्रब्रूतादिति । सौदत्येषो ऽच्छावाको जघनेन स्वं धिष्णियमानयति नेष्टा पत्नीं पत्नेजनीरादाय[2] प्रेह्युदेहीत्येतेन निगदेनाथैनां पूर्वया द्वारोपनिष्क्रमय्यापरया द्वारा सदः प्रपाद्य जघनेन नेष्टुर्धिष्णियमसंचरे सामपथे पत्नेजनीः[3] सादयति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः पत्नेजनीः सादयामि यज्ञाय वः पत्नेजनीः सादया- मीत्यथाहाग्नीध्रः सन्नो ऽच्छावाको ऽच्छावाकं सन्नमुप पत्नेज- नीरसीषदन्नित्येतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्यग्ना स्यात्पत्नी पत्नीशाले । ॥ १५ ॥ चतुर्थः ॥

---

१ Thus HJF Bh. Ke⁴; ॰भक्षयति BT.

२ Thus F; पात्नेजनी॰ BT, पात्नेजनं कलशं instead of पत्नेजनीर् HP, comp. VII. 3 (page 203. 10).

३ Thus all except J, which has पात्नेजनीः ।

अथर्तुपात्रे आददाते दक्षिणमेवाध्वर्युरुत्तरं प्रतिप्रस्थाताध्वर्युः पूर्वो वायव्येन द्रोणकलशाद्गृह्णात्युपयामगृहीतोऽसि मधवे त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाता गृह्णात्युपयामगृहीतोऽसि माधवाय त्वा जुष्टं गृह्णामीति । यथावादायोपनिष्क्रामतो दक्षिणमेवाध्वर्युर्दार्वाङ्गं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता दार्वाङ्गं निश्रयमाण उपरमत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युः । स गृह्णात्युपयामगृहीतोऽसि शुक्राय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता ।*स गृह्णात्युपयामगृहीतोऽसि शुचये त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युः । स गृह्णात्युपयामगृहीतोऽसि नभाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युर्विपर्यस्य पात्रे । स गृह्णात्युपयामगृहीतोऽसीषाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषडृतुना प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य

पात्रꣳ । स गृह्णात्युपयामगृहीतो ऽस्यूर्जाय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युः । स गृह्णात्युपयामगृहीतो ऽसि सहाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णात्युपयामगृहीतो ऽसि सहस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यते ऽध्वर्युर्विपर्यस्य पात्रꣳ । स गृह्णात्युपयामगृहीतो ऽसि तपाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुभिः प्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य पात्रं । तमाह प्रतिप्रस्थातरुपैतेन पात्रेण रमेत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येत्यध्वर्यू यजतमित्याह प्रशास्ता । होतरेतद्यजेत्याहाध्वर्युर्वषट्कृते जुहोति । मां ऽपैवामीनं प्रतिप्रस्थातारमनुप्रपद्यते । प्रतिप्रस्थाताच पूर्वो गृह्णात्युपयामगृहीतो ऽसि तपस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युर्गृह्णात्युपयामगृहीतो ऽसि सꣳसर्पो ऽस्यꣳहस्पत्याय त्वा जुष्टं गृह्णामीति । यथावादायोपनिष्क्रामतो । दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता[1] । प्रतिप्रस्थाताच श्रावयत्यो श्रावयास्तु श्रौषड्ऋतुना प्रेष्येति । गृहपते यजेत्याह प्रशास्ता ।

---

[1] om. BT.

होतरेतद्वदेत्याह गृहपतिर्वषट्कृते सहोभौ जुहुतो ऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति[1] तमाह प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाणेति तेन प्रतिप्रस्थातैन्द्राग्नं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुता पात्रेणैन्द्राग्नी आगतं सुतमित्यनुद्रुत्योपयामगृहीतो ऽस्यैन्द्राग्निभ्यां त्वा जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत्पात्रं संभक्षयत्यृतुना पीतस्येति होता पोता नेष्टाग्नीध्रा ब्राह्मणाच्छंसिना मैत्रावरुणेनेत्यथ विपर्यस्य पात्रं होत्रैव चतुः संभक्षयत्यृतुभिः पीतस्येति होता पोता नेष्टाच्छावाकेनेत्यथ विपर्यस्यैव[2] पात्रं होत्रैव द्विः संभक्षयत्यृतुना पीतस्येति ॥ १६ ॥

अथ होतारं विपृच्छति प्रणवमुपांश्वशंसं शंसिष्यसीउ विद्याहाउमिति स यथैनं होता प्रत्याह तच्छ्रुत्वा निगृह्य पात्रं पराङावर्तत इडा देवहूरिति यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्यथैनमाह्वयते होता प्रत्याह्वयते ऽध्वर्युः शंसति प्रतिगृणाति यदुपांशु शंसति तदुपांशु प्रतिगृणाति यदुच्चैः शंसति तदुच्चैः प्रतिगृणाति संततं वा विग्राहं वा प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतमैन्द्राग्नं ग्रहमनूद्यच्छन्ते नाराशंसानथाश्रावयत्याश्रावयास्तु श्रौषडुक्थशा यज सोमस्येति वषट्कृतानुवषट्कृते द्विर्जुहोति तथैव

१ B here and infra संपातम् instead of संस्रावम् (once संस्रायम्)।
२ एव om JT.

द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्त्येतस्यार्चं नाराशꣳसा अन्वायन्त्येतु-सवनभक्ष इन्द्राग्निभ्यां पीतस्येति । होता चैवाध्वर्युश्चैतस्याꣳ संभक्षयतो नराशꣳसपीतेन[1] नाराशꣳसान्नराशꣳसपीतस्य[2] सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमस-मेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाꣳश्चैव स इत्यात्मानं प्रत्यभिमृशन्ति । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो वैश्वदेवायाथ प्राङेत्य शुक्रपात्रमा-ददान आहोन्नेतर्यदेमं वैश्वदेवं ग्रहं गृह्णाम्यथोदञ्चꣳ राजानं पूतभृतमभि संपवयताद्दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतादिति । स तथा करोति । स शुक्रपात्रेण वैश्वदेवं कलशाद्गृह्णात्योमास-श्चर्षणीधृत इत्यनुद्रुत्योपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते वैश्वदेवाय । स्तोत्र एषोत्तमेति प्राक्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योच्छ्रत एतं वैश्वदेवं ग्रहमनूच्छ्रन्ते नाराशꣳसानथा-श्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानु-

1 Thus PBH Bh. Ke4. नारा° the other MSS.

2 Thus, नराशꣳसपीतस्य PB Bh. Ke4. Mantramālā.

वषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसानानुप्रकम्पयन्त्येतत्पात्रं नाराशंसा आप्याययन्त्यनुसवनभक्षो विश्वैर्देवैः पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन[1] नाराशंसा-नराशंसपीतस्य[1] सोम देव ते मतिविदः प्रातःसवनस्य गायत्र-छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते अथः समुपहूय भक्षयन्ति । यथाचमसं चमसाञ्छिन्त्वा स इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चम-सांस्सर्वभक्षा मार्जयन्ते । ऽथाह प्रतिप्रस्थातरिमे ऋतुपात्रे एतच्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपिसृजेति । स तथा करोत्यथ प्राञ्चायन्नाह ॥ १७ ॥

मैत्रावरुणस्य चमसमनूनयध्वमुन्नेतः सोमं प्रभावयेति । मैत्रावरुणचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांस्समुन्नी-योत्तरवेद्यां सादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं । तस्मिन्नेतस्य रात्र्यास्तृतीयवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थेभ्य उक्थायुवं[2] यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति । पुनर्हविर-सीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्यथ ते योनिर्मित्रावरुणाभ्यां त्वेत्यथाप उपसृज्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । मैत्रावरुणा-

---

१ The various readings as supra, page 229,3 ; HJ om. the bhakṣaṇamantra.

२ Here and infra the MSS. have sometimes उक्थेभ्य and उक्थायुषं ।

वैषोक्तमेति प्राङ्मैत्रावरुणस्य काशात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते मैत्रावरुणः । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं यज्ञमनूद्युच्छन्ते चमसानध्वर्युरानयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहुत्यथ प्रदक्षिणमावृत्य मैत्रावरुणस्य चमसे ग्रहस्य संस्रावमवनयति ऋतं त्वा ऋते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वाथैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो मित्रावरुणाभ्यां पीतस्येति । मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसांश्चिन्न म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथाह प्रतिप्रस्थातर्यज्ञौ ते प्रचरेति । तच्छ्रुत्वा प्रतिप्रस्थाता प्राङायन्नाह ॥ १८ ॥

ब्राह्मणाच्छंसिनश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । ब्राह्मणाच्छंसिनश्चमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांश्चमसानुन्नीयोत्तरवेद्यां सादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं । तस्मिन्नेतस्य राज्ञो ऽर्धवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राय त्वा जुष्टं गृह्णामीति । पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । ब्राह्मणाच्छंसिन

पवीतमेति प्राङ्ब्राह्मणाच्छंसिनः कालात्पराङावर्तते प्रति-
प्रस्थातारंभ्येनमाह्वयते ब्राह्मणाच्छंसी। प्रत्याह्वयते प्रतिप्रस्थाता।
शंसति। प्रतिगृणाति। प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत
एतं ग्रहमनूद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा
यज सोमानामिति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विः
सर्वांश्चमसाञ्जुहुत्वाथ प्रदक्षिणमावृत्य ब्राह्मणाच्छंसिनश्चमसे
ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो
मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा चैवैतत्पात्रमुपनिधाय
भक्षैः प्रत्यक्ष्य आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति। ब्राह्मणा-
च्छंसिनश्चमससेवैते भयः समुपहूय भक्षयन्ति। यथाचमसं
चमसाश्विन्व स इत्यात्मानं प्रत्यभिमृशन्ते। नाप्याययन्ति
चमसांस्सर्वेभक्षा मार्जयन्ते। ऽथ प्राङायन्नाह ॥ १९ ॥

अच्छावाकस्य चमसमनून्नयध्वमुन्नेतः सर्वेश एव राजा-
नमुन्नय मातिरीरिचः प्रतिप्रस्थातस्त्वेतेन ग्रहेण रमेथा यज-
मानेति। पूर्वया द्वारा हविर्धानं प्रपाद्याथैतच्चमसं फलकयोः
प्राचीनग्रीवमुत्तरस्सोमोपस्तृणाति यत्र प्रतितिष्ठति वा तूष्णीं
वा। तस्मिन्संमुखाग्रावाणः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे
राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति
द्वाभ्यामथैनमुद्गातृभ्यः प्राङ्सर्पन्निरंस्त्वचेष्टन्ति यत्रे विदुरथो-
दञ्च्याधवनीयमर्धं वसतीवरीणामवनयत्यर्धमेकधनानां। पुरो-
ऽर्धं वसतीवरीः सादयति। पश्चादर्धमेकधनानच्छावाकचमस-
मेव प्रथममुन्नयन्ति। यथोपपादमितरांस्सर्वेश एव राजानं

प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारावित्यत एवोर्ध्वेन । संप्रसृप्याग्नीविदित्याध्वर्युः प्राकायजाहाभिषोतार एत[1] कृयत[1] ग्रावस्तुतमेहि[2] यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तासु तथैव निग्राभ्यासु यजमानं वाचयति । तास्तथैव यजमानाय संप्रदाय ग्रावाणमादत्तेऽन्यमुपांशुसवनात् तथैव प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमभि मिमीत इन्द्राय त्वेन्द्राय त्वेति । पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं । दशकृत्वो मिमानः सर्वत्र एव राजानं मिमीते । ऽङ्गुलिरभ्युह्य ग्रावस्तुत उष्णीषं प्रयच्छत्यङ्गिरेवाभ्युह्याध्वर्यीरावसथं वासो हरन्ति[3] । तथा मितं राजानं होतृचमसीयाभिरुपसृजति । तथा संप्रयौति । तथा तिरश्चर्मण्फलके अभिमृशति । तथा हस्तौ वीचयति । नाचाऽंशून्सृयते । घोषवन्त एवाभिषुण्वन्तीहाइ इहाइ इहेति[4] । तदेव पदिनयन्तीहाइ[5] इह इहाइ इह इहाइ इहेत्यथ संभरणीये निक्रीडयन्तीहाइ इहाइ इहेत्यथैनं सुसंभृतं संभरण्यां संभृत्योत्रैव उन्नयच्छति ।

---

१ Thus PB TH Mantramālā.

२ Thus PTFH Bh., Mantramālā, Padārthanirv.; ॰स्तुतमेहि BJ Keś.

३ Thus BHTP Bh; हरति F.

४ Here and l. 13, 14 BP have the pluti sign also after the last इह ( thus: इहाइ इहि ).

५ Uncertain reading. BT तदेवपदिनयंती॰; H: तदेवपदिनियंती॰; F: तदेत्यावैवपदिदेवंती॰; P: तदेवपदिनयंत इह; Bh. and Keś. give no help ( निक्रम्य नयन्ति, Bh.)

तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीयस्तृतीयस्य तृतीये हृदुपयन्ति हृद्वृद्वृहदित्युन्नी-यमानतो दशापवित्रेण परिवेष्योन्नेष उत्प्रयच्छति । तमुन्नेता-धवनीये[1] विचाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य[2] चर्मणि निदधाति । तस्मिंस्तथैव संमृज्याप्याप्यः हत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहति । तथोद्गाता[3] वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपस्पृश्य प्राञ्चं ग्रावस्तु द्रोणकलशमभ्यूहति । तस्मिंस्तथैवोदीचीनदशं दशापवित्रं वितत्य प्रसिद्धं शुक्रामन्थिनौ ग्रहौ गृहीत्वर्तुपात्राभ्यां द्वौ मरुत्वतीयौ ग्रहौ गृह्णाति ॥ १ ॥

मरुत्वन्तं वृषभं वावृधानमिन्द्र मरुत्व इह पाहि सोम-मिति द्वाभ्यामंशोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति । तं तथैव त्रिरभिहिङ्कृत्य परिमृज्य सादयति । तथोक्थ्यं गृह्णा-त्युक्थ्येन राजानं परिदधाति । तथोपर्यर्धे द्रोणकलशे परिप्लु-पात्रं प्राश्य द्रप्सानुमन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इति । तथोन्नेतारमाहातिरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान्ग्रहीष्यामीति । तथातिरिक्ते पूतभृति पवमानस्य ग्रहान्गृह्णा-त्युपयामगृहीतो ऽसीन्द्राय त्वेति द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीयमिन्द्राय त्वेति पूतभृतं । तथोन्नेतरित्याह प्राञ्चं राजानं पूतभृतमभि संपन्नयताद्ग्राभिराधवनीयं ग्रहा न्युन्नता-

१ Some MSS : तमुन्नेता॰ ।

२ उपाभिहृत्य F, उपावहृत्य BHP, comp. p. 208. 12.

३ तथोद्गाता H.

दिति । स तथा करोति । तथाप उपस्पृश्य बर्हिषी आदायोप-
निःसर्पन्ति । तेषु तथैव समन्वारब्धेष्वाध्वर्यवे स्रुवाहुतिं
जुहोति । विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने
न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ
स्याम स्वाहेत्येतयाध्वर्युं जुह्वतो । यथावेदमितरे जुह्वत्यथ
प्रदक्षिणमावृत्य सदो ऽभि पवमानꣳ सर्पन्ति[1] । तथा[1] प्रदक्षि
यथायतनमुपविशन्ति । तथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी
प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा
तूष्णीं वा । तथोपाकरणं जपति वायुर्हिंकर्तेति । स एष पञ्चदशो
माध्यंदिनः पवमानो भवति । तस्याष्टम्यां प्रस्तुतायां वाचयति
सुपर्णो ऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथ
चतुर्होतारं व्याचष्टे । उद्गुते वाचि संप्रैषमाहाग्नीदग्नीन्विहर
बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातर्दधिघर्माय
दुग्धाद्धरेति । यथासंप्रैषं तौ कुरुतस्तथाप[2] उपस्पृश्याहेहि
यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा ममस्तꣳ
राजानमुपतिष्ठते । तथावकाशैश्चरति । तथा प्रचरण्यां [illegible]
गृह्णीते । तथैव आग्नीध्र आग्नीध्रीयाद्धिष्ण्यादनुपूर्वं[3] धिष्ण्ये-
ष्वङ्गारान्विहरति । तथा पुरस्तात्प्रत्यङ्ङासीनो विहृतान्धिष्णि-
यान्व्याघारयति । तथोत्तरस्य हविर्धानस्य युगे प्रचरणीꣳ

१ प्रसर्पन्त्यथ BJ.

२ Thus BT; कुरुतोथाप the other MSS.; J corrupt.

३ Thus BJHP; चानपूर्वं F; चानुपूर्वं T.

वाहयति तथा वाकाग्निमेन यथा पुरस्ताज्जुहोति अन्तरा गार्हपत्याहवनीयात् ॥ २ ॥

अथाग्नीध्र हविर्धाने उपविश्य दधिघर्माय दधि आनयति तदाहृतमवेक्षते ज्योतिरसि वैश्वानरं पृश्नियै दुग्धमिति । बर्हिषी अन्तर्धाय स्रुचे वा चमसे वा गृह्णाति यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः । तावन्तमिन्द्र ते ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतमित्यपोह्य बर्हिषी अथैनꣳ श्रीणाति वाक् च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीताꣳ शृतोऽसि शृतंकृतः शृताय त्वा शृतेभ्यस्त्वा शृतं हविरित्यथाह होतर्वद घर्मं वाचमित्यथैनमादायोपोत्तिष्ठन्नाह आनय हविरित्यथाक्ष्याश्रावयाह दधिघर्मस्य यजेति वषट्कृते जुहोति यमिन्द्रमाहुर्वरुणं यमाहुर्यमिन्द्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वा स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षꣳ स यावन्तः प्रवर्ग्यऋत्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति मयि त्यदिन्द्रियं महन्मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यं त्रिशुग्घर्मो विभातु मे ॥ आकूत्या मनसा सह विराजा ज्योतिषा सह । यज्ञेन पयसा सह ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह सत्येन तपसा सह । तस्य दोहमशीमहि तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि तस्य त इन्द्रेण पीतस्य मधुमत

उपहूतस्योपहूतो भक्षयामीति । निर्णिज्य पात्रं प्रयच्छति । तथा सवनीयान्पुरोडाशान्प्राचयति । तेषां तथैव समवद्यन्नाह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । प्रत्यनक्ति । तथोपभृति । स्विष्टकृते सर्वेषाᳲ सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यत्याक्रम्याश्राव्याह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति । तथा समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोति । तथोदङ्ङत्याक्रम्य यथायतनᳲ स्रुचौ सादयित्वा तथैव पात्र्यामिडाᳲ समवधाय प्रणीय पुरोडाशान्प्रश्निणोत्यनु हैके संयन्ति पशाव इडेति वदन्तो । ऽथ प्राशायन्ताहोत्रीयमानेभ्यो ऽनुब्रूहि ॥ ३ ॥

होतुश्चमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो ऽपि सᳲसृजस्व प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपकम्पस्वेति । यथासंप्रैषं ते कुर्वन्ति । समानं कर्माश्रावणादाश्रावण एव[1] व्येत्यध्वर्युः[1] पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषण्माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति । वषट्कृते यथोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मेति ।

---

1 Uncertain reading and interpunction; एववेत्यध्वा॰ BJ; एवेत्यध्वा॰ T Kes.; एव--त्यध्वा॰ F; एवैतिमध्वा॰ HP; Bhavasvamin: एव वेति निपात इत्यर्थः. A Prayoga · एवमति निपात इत्यर्थः (Grantha).

वषट्कृतानुवषट्कृते द्विर्जुह्वतश्चैव। द्विर्द्विः सर्वांश्चमसाञ्जुहोति। तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मण इति। तथा[1] प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा। तथा प्रतिप्रस्थातोत्तरार्धे आहवनीयस्य मन्थिनः संस्रावं जुहोति। तथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनꣳ सादयति। अथैते सर्त्विजां चमसाश्चैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धोषकस्मादभ्युन्नीयोपावर्तन्ते। तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति। वषट्कृतानुवषट्कृते द्विर्जुहोति। ब्राह्मणाच्छंसिन्यज पोतर्यज नेष्टर्यजाच्छावाक यजाग्नीद्यजेति। षड्ढोताः संपाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यायेण होतारमुपविशत्यथाऽग्नीदिति। स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति। तथाप उपस्पृश्य होत्र इडामुपोह्वयन्ते। उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसानुपहूतायामिडायामग्नीध आदधाति षडवत्तं। प्राश्नन्ति। मार्जयन्ते। इडोपहूताꣳश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्य रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्विन्व स इत्यात्मानं प्रत्यभिमृशन्ते।

---

१ तथैव II.

आप्याययन्ति यमस्मानाप्यायस्व समेतु त इति । वीडग्नि नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधो-ऽवस्तीर्याथ मध्यतीयावैतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्यन्ना स्यात्पत्नी पत्नीशाले । ॥ ४ ॥ प्रथमः ॥

अथ दाक्षिणानि होष्यन्गार्हपत्य आज्यस्थालीꣳ सस्रुवाꣳ स्रुचं वायसांश्चैतस्य वसनस्यान्तमायां दशायां हिरण्यग्रन्थिः प्रग्रथितो भवत्यथैतस्समादायाहेहि यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण वेदः परीत्य पूर्वया द्वारा शालां प्रपाद्य समन्वारब्धेष्वपि-प्रतेषु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यान्तꣳ स्रुग्दण्ड[1] उपसंगृह्य[2] सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्युदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहेत्यथापरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्यथाग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यैवान्तꣳ स्रुग्दण्ड उपसंगृह्य नयवत्याग्नीध्रे जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथ दिवं गच्छ सुवः पतेति हिरण्यमूर्ध्वमुद्गृह्णाति । सृजन्ते दक्षिणा दक्षिणापथेनान्तरेण

---

1 Thus all and P, except B, which has °स्वाचारांच° ।

2 °चुदंसस्य° BJ.

सदश्च गार्हपत्यं चान्तरेण सदश्चाग्नीध्रं चान्तरेण चात्वालोत्करावेवमुदीच्यः प्रतिपद्यन्ते। ताः प्रदक्षिणं कृत्वाभ्येति रूपेण वो रूपमभ्येमि वयसा वय इत्यथैना विभजति तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाक इत्यथ सदो ऽभ्येत्येतत्ते[१] अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीरिति। ॥ ५ ॥

अथैष आत्रेयो ऽग्रेण सद आस्ते। तमभ्येति[२] ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यं सुधातुदक्षिणमित्यथैन-मुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमितीतरः प्रत्याह। तं तथैव द्वितीयमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमित्येवेतरः प्रत्याह। तं तथैव तृतीयमुत्क्रम्य पृच्छति क आत्रेय इत्यय-महमित्येवेतरः प्रत्याह। तस्य पाणौ हिरण्यमादधाति चन्द्र[३]मङ्क्ष्वेति यद्वान्यदुपकल्पते[४]। ऽथाग्नीध्रं हृत्वा हिरण्यमुप-मग्नीधे ददात्यथ सद आगत्य ब्रह्मणे ददाति होत्र उद्गात्रे। ऽथ हविर्धानं हृत्वाध्वर्यवे ददाति य उ चैनमन्ये ऽभितो भवन्त्यथ सद आगत्य प्रस्तोत्रे ददाति प्रशास्त्रे ब्राह्मणाच्छंसिने ऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तु-रन्ततो। यथासमुदितं प्रसर्पकेभ्यो। ऽथाहैहि यजमानेत्याग्नीध्रं

---

१ Thus FHTP, Keś.; अभ्येति BJ.

२ Thus TPH; अभ्येति the other MSS.

३ चंद्र THF Mantramālā; चंद्रं BP and a Prayoga, चंद्रमवेति Keś.

४ उपकल्पयते the MSS.

हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नौ पञ्च वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुरित्येतानि कामातीमोपेश्चरत्यग्निना[1] देवेन ये देवा यज्ञहन इत्येताभ्यामनुवाकाभ्यामथ यजमानं प्राचमीक्षयति वि सुवः पश्य व्यन्तरिक्षमित्यथैनꣳ सदस्युपवेशयति यतस्व सदस्यैरित्यथ दक्षिणाः समनुदिशत्यस्मद्राता देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान्देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतमिति ॥ ६ ॥

अथ प्राकाशयन्नाहेन्द्राय मरुत्वतेऽनुब्रूहीति तच्छ्रुत्वा प्रतिप्रस्थाता ग्रहावादायोपनिष्क्रामत्युपनिष्क्रामत्येवाध्वर्युर्ग्रहावादाय उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे ऽन्यतरं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्राय मरुत्वते प्रेष्येति वषट्कृते उभौ जुहुतोऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सꣳस्रावमवनयति तमाह प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाणेति तेन प्रतिप्रस्थाता तृतीयं मरुत्वतीयं ग्रहं गृह्णाति द्रोणकलशादपरिप्लुना पात्रेण मरुत्वाꣳ इन्द्र वृषभो रणायेत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा मरुत्वत इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत्पात्रꣳ संभक्षयतीन्द्रेण मरुत्वता पीतस्येत्यथ निगृह्य पात्रं पराङावर्तत इन्द्रा देवैरिति यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्य-

---

1 ॰तीमांचे॰ TJHP Keś. (twice) ; ॰तिमो॰ BJ Keś. (once).

श्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । गृणाति । प्रतिगृणाति । प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङेत्योद्यच्छत एवं तृतीयं सवनीयं पात्रमनूद्यच्छन्ते नाराशंसानथाश्रावयत्यास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानुवषट्कृते जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्येतत्पात्रं नाराशंसा भक्षायन्त्यनुसवनभक्ष इन्द्रेण मरुत्वता पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन नाराशंसान्नराशंसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैतेऽथः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[1] माहेन्द्राय । ॥ ७ ॥

अथ प्राङेत्य शुक्रपात्रमाददान आहोन्नेतर्यदिमं माहेन्द्रं ग्रहं गृह्णाम्यथोदञ्चं राजानं पूतभृतमभि संप्लवयतादृशाभिर्द्रोणकलशं स्पृष्ट्वा न्युब्जतादिति । स तथा करोति । स शुक्रपात्रेण माहेन्द्रं द्रोणकलशाद्गृह्णाति महाँ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतोऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते माहेन्द्राय ।

१ B agnín °वाचयम° ।

प्रस्तुते साचि संप्रैषमाहाभिषोतारो ऽभिषुणुताग्नीदाग्निं विनयोलूखलमुदाहृत्य प्रतिप्रस्थातर्वाहणामेककपालं निर्वप सौम्यस्य विहीति यथासंप्रैषं ते कुर्वन्ति होत एषोत्तमेति प्राङ्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाक्रयते होता प्रत्याक्रयते ऽध्वर्युः शंसतीति प्रतिगृणाति प्रविद्धमुक्थं प्रतिगीर्य प्राङ्त्योपच्छन एतं माहेन्द्रं पदमनूच्यन्ते नाराशंसानथा- श्रावयत्यो श्रावयाश्चौषडुक्थशा यज सोमस्येति वषट्कृतानु- वषट्कृते द्विर्जुहोति तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्येतत्पात्रं नाराशंसा अप्यायनत्यनुसवनभक्षो सहेन्द्रेण पीतस्येति होता चैवाध्वर्युश्चैतत्पात्रं संभक्षयतो नराशंसपीतेन नाराशंसा- नराशंसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षया- मीति होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते माप्याययन्ति चमसान्संभक्ष्य मार्जयन्ते ऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थपर्यायैश्चरति[1] तं तथैवोक्तमे ऽतिग्राह्य आहाच्छा- वाकस्य चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरी- रिचः प्रतिप्रस्थातरुपैतेन पदेन रमैहि यजमानेति पूर्वया द्वारा हविर्धानं प्रपाद्याथोदञ्च्याध्वनीयश्च सर्वश एव वसती- वरीः पर्यस्यति सर्वश [2]एवैकधनाभ्युरोऽचमेव वसतीवरीकलशं

१ चचच॰ all exc. TP. २ एव om BJ.

ब्रह्मा स्तुवन्ति । पश्चादच्छावाकमेकधनानच्छावाकचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्सर्वेभ्य एव राजानꣳ सह्नीयोन्नयन्तेषाꣳ सꣳस्राव्यमर्धपादन्त उक्थ्यस्थाल्या औपभृतं पात्रं । तस्मिन्नेतꣳ सर्वेभ्य एव राजानं गृह्णाति य उक्थ्यस्थाल्यां भवति । स[1] उ[1] वा[1] ऐन्द्र[1] एव भवत्यथोक्थ्यं[2] वाचीत्याह माध्यंदिनꣳ सवनं प्रतिगीर्य प्रशास्तः प्रस्तुहीति । सर्पतेत्याह प्रशास्ता । संतिष्ठते माध्यंदिनꣳ सवनम् । ॥ ८ ॥ द्वितीयः ॥

प्रसर्पन्ति तृतीयसवनाय देवी द्वारावित्यत एवोर्ध्वेन । संप्रसृप्ताग्निविदित्वाध्वर्युः प्राङायन्नाग्नीध्रं परिश्रयणमाहर प्रतिप्रस्थातराग्निरमानय प्रातस्तमादित्यपात्राय दध्याहरेति यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य य एष उपाꣳशुपात्रे ऽꣳशुः प्राप्तो भवति तं माध्यंदिनीय ऋजीषे ऽपिसृज्य यमेव कं च[3] ग्रावाणमादायोन्नेतारमाहाहरोपसृजेत्युपसृजत्युन्नेताधवनीयादुदचनेनापरिमितमभिषुत्याथैनꣳ सुसंभृतꣳ संभरणाꣳ संभृत्योन्नेत्र उत्प्रयच्छति । तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत । एवं तृतीय । ऋजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्र उत्प्रयच्छति । तदुन्नेताधवनीये[4] विधाय प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषं उपानिहत्य[5] नीड उत्सादयति । परिश्रयन्ति पूर्वां द्वारमपरां चाग्रादन्त

---

१ सउवैरेन्द्र B; सउवैन्द्र T; PHF om. वा; J corrupt

२ यथोक्थ्यं JT.   ३ कंचन BF.   ४ तमुन्नेता॰ some MSS.

५ उपानिहत्य here all, also P.

आदित्यस्थाल्या औपग्रहं पात्रं॥ तस्मिन्नेतस्य राज्ञस्तृतीयमेकं गृह्णाति य आदित्यस्थाल्यां भवति कदा च न स्तरीरसीत्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीति। बर्हिषी अन्तर्धाय शृतातङ्क्येन श्रीणाति कदा च न प्रयुच्छसीत्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यपोद्धृत्य बर्हिषी अर्धमेवाꣳ राज्ञो गृह्णाति यज्ञो देवानां प्रत्येति सुम्नमित्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यथैनꣳ सविमत उपाꣳशुसवनेन श्रीणाति विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामीत्यथैनमुद्गृह्णात्येव विज्ञानमुपैति यदि तावत् प्रस्कन्दत्यष्टुवर्षुकः[१] पर्जन्यो भवति। यदि चिरमवर्षुको। न सादयतीति ब्राह्मणमथैनमुपाꣳशुसवनं दशापवित्रेण परिवेष्ट्य तेनाधस्तात्पात्रमुद्गृह्णत्यूर्मिकारमविचिन्वन् ॥ ९ ॥

आ समुद्रादान्तरिक्षात्प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो वर्षयन्तून्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिमित्यथैनमुपाꣳशुसवनं[२] दशापवित्रेण परिमृज्य ग्रावस्वपिसृजति। विहृतस्मिं पूर्वां द्वारमपरां चायेन[३] चहं बर्हिषस्तेनापिधायोपोप्तिसृजादादित्येभ्यः[४]

---

१ Thus J only; °वत्सवर्षुकः F; °देवर्षुकः BP, the other MSS. are still more corrupt.

२ °चवेनमु° all except H, which has °चवेतमु°।

३ Thus PHJ Keś.; चवेन the other MSS.

४ °चोपोप्तिसृज° TP; °चोपोप्तिसृज° J; °चोपतिसृज° B; °चोप्तिसृज° HF.

प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यो ऽनुमूचीत्युत्तमेनामात्याप्रादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्येति । वषट्कृत ओषधीः प्राश्याग्राबादित्यं जुहोति यथादेव । न जुहोत्यनुमीयते । पर्यावृत्तस्यैव प्रतिप्रस्थाता पात्रमाहरत्येतस्मिन्काले प्रतिहर्ता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन्वा राज्ञ उदञ्चनानानयत्याग्रयणमेवाध्वर्युराहरत्यादित्यस्थाल्यौ प्रतिप्रस्थाता ओपयाप्य संमृद्नाति । तासां तिसृणां चतसृणां वा[1] धाराणां [2]तथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति । तं[3] तथैव शिरभिहिङ्कृत्य परिमृज्य सादयत्यपोद्धृत्य पवित्रं बर्हिषी अन्तर्धायाग्निरमवनयत्यन्वारब्धायां पत्न्यामस्मे देवासो वपुषे चिकित्सतेति चतसृभिरनुच्छन्दसमपोद्धृत्य बर्हिषी पूतभृतो बिले द्रप्सानुमन्त्रयते । द्वौ पवमानस्य ग्रहौ गृह्णाति । तथोन्नेतरित्याह आग्रयणं राजानं पूतभृतमभि संपवयताद्ग्राभिराधवनीयं मृत्वा न्युब्जतादिति । स तथा करोति । तथाप उपसृज्य बर्हिषी आदायोपनिःसर्पति । तेषु तथैव समन्वारब्धेष्वाधवनीये स्रुवाहुतिं जुहोति । ॥ १० ॥

इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वनाः स्वरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहेत्येतयाध्वर्यू जुहुतो । यथावेदमितरे जुह्वति । तथा

---

१ च T.   २ तथा om THF.   ३ om. T.

प्रदक्षिणमावृत्य सदो ऽभि पवमानꣳ सर्पन्ति । तथा सदसि यथायतनमुपविशन्ति । तथोद्गाथे वा प्रस्तोथे वा बर्हिषी प्रयच्छत्युक्थामथोऽपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा । तथोपाकरणं जपति वायुर्हिंकर्तेति । स एष सप्तदश आर्भवः पवमानो भवति । तस्य नवम्यां प्रस्तुतायां वाचयति सखासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथ पशुहोतारं व्याचष्ट । उद्गते मास्त्रि संप्रैषमाहाग्नीच्छालाकाग्निहर बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्वेति । यथासंप्रैषं तौ कुरुतस्तथाप उपस्पृश्याऽऽवेहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा समस्तꣳ राजानमुपतिष्ठते । नाचावकाग्नीस्चरति । तथा प्रचरण्यां नवकृत्वो गृह्णीते । तथैव आग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं[1] धिष्णियेषु शालाकान्विहरति[2] । तथा पुरस्तात्प्रत्यङ्ङासीनो विहृताञ्छालाकाग्व्याघारयति[2] । तथोत्तरस्य हविर्धानस्य कूबके प्रचरणीꣳ सादयति । तथा मांकाग्निेन पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् । ॥ ११ ॥

अथ पशुना चरति मनोताप्रभृतिनेडान्तेन । तथा सवनीयान्पुरोडाशान्याचति । तेषां तथैव समःस्यमाह तृतीयस्य

---

१ चानुपूर्वं T; चनुपर्वं PBJ; चनुपूर्वा F; चान,पूर्वं H.

२ शालाकान् PTJ; शलाकान् BHF; शकलान् and शलाकान् H.

सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति। पूर्वार्धाद्द्वक्षायापरार्धाद्वद्यत्यभिघारयति। प्रत्यनक्ति। तथोपस्तृणाति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धाद्वद्यति। द्विरभिघारयति। न प्रत्यनक्त्यथाक्रम्याश्राव्याह तृतीयस्य सवनस्येन्द्राय पुरोडाशानाम्प्रस्थितान्प्रेष्येति। वषट्कृते जुहोति। तथा समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति। वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्कृत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा तथैव पात्र्यामिडाꣳ समवधाय प्रतीक्षः पुरोडाशाग्प्रश्लिष्णोत्यनु हैके संयन्ति पशव इडेति वदन्तो ऽथ प्राङायन्नाहोत्रीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वं तीव्राꣳ आशीर्वतः कुरुध्वमुन्नेतः सोमं प्रभावयेति। होतृचमसमेव प्रथममुन्नयन्ति। यथोपपादमितरांश्चमसानुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथ प्राङेत्य होतृचमसमादायाश्राव्याह तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राꣳ[1] आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति। वषट्कृते जुहोति श्येनाय पत्वने स्वाहेत्यनुवषट्कृते हुत्वन्ताꣳ होत्रा मधोर्घृतस्य स्वाहेति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोति। तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृदाशीर्वतो ऽभ्युन्नीयोपावर्तध्वमिति। यन्त्येते सहर्त्विजो चमसानर्थैते होत-

1 विश्वदे॰ BT. Mantramala, the other MSS., also P, have विश्वे॰।

काणां चमसाध्वर्यवः सकृत्सकृदाग्नीध्रतो ऽभ्युन्नीयोपावर्तन्ते । तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति । वषट्कृते जुहोति विष्टम्भाय धर्मणे स्वाहेति । परिधये जनप्रथनायेति[1] ब्राह्मणाच्छंसिन । ऊर्जे होत्राणामिति पोतुः । पयसे होत्राणामिति नेष्टुः । प्रजापतये मनवे इत्यच्छावाकस्य-र्तमृतपाः सुवर्वाडित्याग्नीध्रश्चमसं[2] चमसमेवानुवषट्करोति[3] हव्यन्ताꣳ होत्रा मधोर्घृतस्य स्वाहेति । सप्त होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याग्रेण होतारमुपविशत्यथाऽऽग्नीध्रादिति । स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति । तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्त । उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसानुपहूतायामिडायामग्नीध्र आदधाति षड्वत्तं । प्राश्नन्ति । मार्जयन्त । इडोपहूताꣳ स्वमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनद्रुत्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्त । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधो ऽध[4]

---

१ BTP add स्वाहा also after ॰प्रथनाय ।

२ Thus, आग्नीध्रश्च॰ HPT; आग्नीध्रश्च॰ or आ॰ BJ.

३ Thus TFPH Bh; चमसमेवानुवष॰ J; चमसेवानुवष॰ B K...

४ B again ॰वार्धम॰ ।

उपामनवन्तो वैश्वदेवाय । चमसांश्चमसाध्वर्यवोऽङ्क्तौ पुरोडाशशकलानुपास्यन्ति । नव होतृचमसे । तानेत एवानुमन्त्रयते ऽत्र पितरो यथाभागं मन्दध्वमिति तस्मिन्काले[1] आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्यशना स्यात्पत्नीशाले ।

॥ १२ ॥ तृतीयः ॥

अथ प्राङायत्याह देवाय सवित्रे ऽनुब्रूहि प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहं गृहीत्वोपास्व मा सीषद इति । तच्छ्रुत्वा प्रतिप्रस्थातान्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहं गृह्णाति वाममद्य सवितरित्यनुद्रुत्योपयामगृहीतो ऽसि देवाय त्वा सवित्रे जुष्टं गृह्णामीति । न सादयतीति ब्राह्मणमसादयित्वैवोपनिष्क्रम्याश्राव्याह देवाय सवित्रे प्रेष्येति । वषट्कृते जुहोत्यथ वै भवति सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णातीति । स[2] सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णात्युपयामगृहीतो[3] ऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमो विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होता समीक्ष्य पराङावर्तेत इष्टा देवहूरिति । यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्यथैन-

१ After मन्दध्वमिति HF ms. उक्त्वा ।

२ स only in PH; F reads यत् ।

३ The words सोमे सोममभिगृह्णाति om. B (are they interpolated?); P also has them

आह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । प्रऽगृह्णाति । प्रतिगृणात्यथ यत्र होतुरभिजानात्येकया च दशभिश्च स्वभूत इति तत्प्रति-प्रस्थाता द्विदेवत्यपात्राणि मार्जालीये मार्जयित्वा पात्रेष्वपि-सृजत्यथ यत्र होतुरभिजानाति प्र[1] द्यावा यज्ञैः पृथिवी ऋतावृधेति तदन्यतोऽमदं प्रतिगृणात्योथा मोद इव मदा मोद इवेत्या व्याहावादथ यत्र होतुरभिजानाति तद्राधो अद्य सवितुर्वरेण्यमिति तदुभयतो-मदमेव[2] प्रतिगृणाति मदा[3] मोद इव मदा मोद इवेत्या व्याहावात्समिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं वैश्वदेवं ग्रहमनूद्यच्छन्ते नाराशंसानथाग्नायन्यो आवयास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्वि-र्नाराशंसाननुप्रकम्पयन्त्येतत्पात्रं नाराशंसा अन्वायन्त्यनुसवन-भक्षो विश्वैर्देवैः पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रं संभक्ष-यतो नराशंसपीतेन नाराशंसान्नराशंसपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दसः पितृपीतस्य

---

१ The reading of the words commencing with प्र is not wholly certain. B om. from प्र द्यावा to अभिजानाति (incl.; line 6); instead of व्याहावाद् (thus JP, l. 6) F has व्याहावात् ।

२ उभयतो॰ FP; अन्यतोमद॰ BJ, but comp. Padārthanirv. page 378 (n°421) and Āp. śrs. XIII. 13. 8.

३ मदा ... इवेति om. TJ; B. मदामोदैवमोदामोदैवेत्या॰; most of the MSS. contract the word इव with the preceding vowel; so HPBJ, but comp. TS. III. 2, 9. 5.

मधुमत उपहूतस्योपहूतो भक्षयामीति। होतृचमसमेवैते भक्षः समुपहूय भक्षयन्ति। यथाचमसं चमसानित्थं न इत्यात्मानं प्रत्यभिमृशन्ते। आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते।

॥ १३ ॥

अथ होतारं विपृच्छति परियक्ष्यसि सौम्या३[1] न परियक्ष्यसी३[1] इति। स यथैनꣳ होता प्रत्याह तथ्कृत्वा सक्थꣳ सौम्यमागच्छत्यथ स्रुचि चतुर्गृहीतं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यजेति। वषट्कृते जुहोत्यथोपस्तीर्य द्विरवद्यति[2] पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति। न[3] प्रत्यनक्त्यत्याक्रम्याश्राव्याह सौम्यस्य[4] यजेति। वषट्कृते दक्षिणार्धपूर्वार्धे प्राचीनावीती सौम्यं जुहोत्यथैनं वैष्णव्यर्चा सुताकृत्याभिजुहोति विष्णो त्वं नो अन्तम इति। यदु वै होतातिवैष्णव्यर्चा परियजति संपन्नमिति नाद्रियेत। तस्मिन्नाज्यमानीयावेक्षते। पवित्रं वै सौम्य। आत्मानमेव पवयन्ते। य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वावेक्षेतेति। तस्मिन्भूय आज्यमानीयावेक्षते यन्मे मनः परागतं यद्वा मे अपरागतम्। राज्ञा सोमेन तद्वयमस्मासु धारयामसीति। मन एवात्मन्दधार न गतमना

१ Some of the MSS. om. the pluti sign. F puts it both times behind the verb. सौम्यान PBF; सौम्यास HJ.

२ Instead of अवद्यति B has, अवद्यन्नाह सौमाणामनुब्रूहीति।

३ om. HF.

४ सोमस्य BJ.

भवतीति ब्राह्मणमथैनमुद्गातृभ्यो हरन्ति । तस्मिंस्तत्सँष्टन्ति
यन्ते । विद्रथ प्राजायन्नाह प्रतिप्रस्थातरुपांशुपात्रेण पात्नीव-
तमाग्रयणाद्गृहं गृहीत्वोपास्स्व मा मीषद् इति । तत्कृत्वा
प्रतिप्रस्थातोपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहं गृह्णात्युपया-
मगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं
ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ इति । बर्हिषी अन्तर्धाय हुतेन
श्रीणात्यहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार ।
यदन्तरिक्षं तद् मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहं भूया-
समुत्तमः समानानामित्यपोद्धृत्य बर्हिषी न सादयतीति
ब्राह्मणमसादयित्वोपनिष्क्रम्याश्राव्याहाग्नीत्पात्नीवतस्य यजेति ।
वषट्कृते जुहोति सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्युपांꣳ-
श्वनुवषट्कृते[1] हुत्वा हरति भक्षꣳ । स यद्यस्मिन्नाग्नीध्र उपहव-
मिच्छत उपैवैनꣳ ह्वयते । नो तेन संभक्षयतो[2] ऽथाहा-
ग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा । संख्याप
उपप्रवर्तयतादूरुणोपप्रवर्तयतात्सव्यं कृत्वोरुमुपप्रवर्तयताद्धोतुश्चम-
समनूक्षयध्वमुक्तेतः सर्वश एव राजानमुक्षय मातिरीरिचः
प्रतिप्रस्थातर्होतृचमसं ध्रुवायावकाशं कुरुतादेहि यजमानेति ।
पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति
भूतमसि भूते मा धा मुखमसि मुखं भूयासमिति । होतृचम-

---

१ करोति instead of कृते T.

२ Thus HJF; °यति TB.

समेव प्रथममुन्नयन्ति । यथोपपादमितरान्त्सर्वंश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप[1] उपसृज्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते यज्ञायज्ञियेनात्र सप्तहोतारं व्याचष्टे । प्रस्तुते साम्नि नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने वामीरनु संदृशि विश्वा रेताꣳसि धिषीयागन्देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमातिष्ठतानु वातस्य पत्मन्निड ईडिता इति । स यदेवैनामुद्गातोपमीवति[2] तदेषा[3] पत्न्यूरुणा पन्नेजनीमुपप्रवर्तयति । नग्नं कृत्वोरुमुपप्रवर्तयति ॥१४॥

होत्र एषोत्तमेति प्राक्होतुः कालात्पराङावर्तते ऽध्वर्युर्श्येनमाक्रयते होता । प्रत्याक्रयते ऽध्वर्युः । शꣳसति । प्रतिगृणात्यथ यत्र होतुरभिजानाति स्वादुष्किलायं मधुमाꣳ उतायमिति तदभ्यतो-मोदं प्रतिगृणाति मोदा मोद इव मदा मोद इवेत्या[4] व्याहावादथ यत्र होतुरभिजानाति तन्तुं तन्वन्रजसो भानुमन्विहीति तत्प्रतिप्रस्थाता ध्रुवं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यथैनं प्रस्थावयति

१ सꣳ found in HT ; omitted in rest of the MSS.

२ °मीयति HJKP Ba. (one MS.) Ke4. °मीवति BT Bh. (another MS.)

३ Thus HBTJP; तदेवा K; सदः एषा K.

४ मोदामोद इवेत्या B. मोदादिवेत्या F; मोद इव मदा मोदे इवेत्या J; मोदा मोदे इव मोदा मोदे इवेत्या ; मोदा मोदैव मदा मोदेवेत्या HP, Bh. and Ke4.: भवस्वेदे मोदा मोद इवमि प्रणवे मदा मोद इवेति ।

विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्वित्यथैनमाहरति दिवि देवान्दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवानित्यथैनꣳ होतृचमसे ऽवनयति ध्रुवं ध्रुवेण हविषाव सोमं नयामसि। यथा नः सर्वमिज्जगदयक्ष्माꣳ सुमना असत्॥ यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत्। यथा नः सर्वा इद्दिशो ऽस्माकं केवलीरसन्निति। प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङेत्योद्यच्छन्त एतꣳ होतृचमसमसमुद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो ऽग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति। होतृचमसभक्षमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्हिन्व स इत्यात्मानं प्रत्यभिमृशन्ते। साप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते। ऽथैताꣳश्चमसानद्भिः पूरयित्वोत्तरेणाहवनीयं प्राचो वोदीचो वा सादयति। तेषु त्रीꣳस्त्रीꣳश्च दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जीलमंयोक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य प्रशास्तः प्रसुहोति। सर्पतेत्याह प्रशास्ता। संतिष्ठते तृतीयसवनम्। ॥ १५ ॥
चतुर्थः ॥

अथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्संमृड्ढीत्याहरन्त्येतानाग्नीध्रादौपयजानङ्गाराꣳस्तान्मध्येन होतारं निवपत्युपसीदत्युपयष्टा गुदतृतीयेनाथाध्वर्युः पृषदाज्यं विहृत्य शुक्राꣳ

समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्येति। वषट्कृते जुहोति प्रेष्य प्रेष्येत्यैकादशानूयाजानिष्ट्वोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति। शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्योन्नेतारमाहोन्नेतर्यज्ञम्ले प्रचरेति। तच्छृत्वोन्नेता द्रोणकलश आग्रयणात्तृतीयं[1] ग्रहं गृह्णात्युपयामगृहीतोऽसि हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामीति। बर्हिषौ अन्तर्धाय धानाभिः श्रीणाति हरी स्थ हर्योर्धाना इत्यपोद्धृत्य बर्हिषौ अथैनमादायोपोत्तिष्ठन्नाहेन्द्राय हरिवते धानासोमानामनुब्रूहीति। शीर्षन्नधिनिधाय विक्रम्याश्राव्याहेन्द्राय हरिवते धानासोमान्प्रस्थितान्प्रेष्येति। वषट्कृते जुहोति सहसोमा इन्द्राय स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षं। स यावन्त ऋत्विजस्तेभ्य उन्नेता धाना व्यावपति। न उन्नेतर्युपहवमिच्छेकेकास्त्वस्यन्ते। मनसा संबाधते ॥ १६ ॥

इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यथैना निर्णिज्योत्तरवेद्याꣳ संनिवपन्त्यापूर्या स्था मा पूरयत प्रजया च धनेन चेति। निवपन्नेव यजमानस्तिस्रो धानाः सचते। अथ याचति स्फ्यमुदपात्रं बर्हिरित्येतत्समादायाहेहि यजमानेति।

---

१ आग्रयणात्तार्द B.

जघनेन दक्षिणेन हविर्धाने[1] परीत्य दक्षिणेन मार्जालीयं धिष्णियꣳ स्फ्येनोद्धृत्यावोक्ष्य दक्षिणाग्रं बर्हिः स्तीर्त्वाद्भिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इत्यथ तिस्रो धाना ददात्येतत्ते ततासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये च त्वामन्वित्यथ[2] पितरो यथाभागं मन्दध्वमित्युक्त्वोदङ् पर्यावृत्याच चक्षोतारं व्याचष्टे ऽथाभिपर्यावृत्य तथैवाद्भिर्मार्जयित्वैतेनैव यथेतमेत्याग्नीध्रीये द्वे स्रुवाहुती जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्यामथाहवनीये शाकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि स्वाहा मनुष्यकृतस्यैनसो ऽवयजनमसि स्वाहा पितृकृतस्यैनसो ऽवयजनमसि स्वाहेत्यथाप्सु सोमान्यर्युपविश्यात्रेण भक्षयन्त्यप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामीत्यथैना निनीयोपोत्थायादित्यमुपतिष्ठन्ते ॥ १७ ॥

अपाम सोममम्मृता अभूमादर्श्म ज्योतिरविदाम देवान्। किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्येति यद्यु वा अस्तमित आदित्यो भवत्याहवनीयमेवैतेन यजुषोपतिष्ठन्ते ऽथाग्नीध्रं हुत्वाग्नीध्रे दधिद्रप्सान्भक्षयन्ति दधिक्राव्णो अका-

---

१ हविर्धाने PHBT; हविर्धानं JF.

२ इति om. HFP.

रिषमित्यथ सर्ववेष्टनं अपन्नभा[1] कवी युवाना सत्या ता धर्मणस्पती। सत्यस्य धर्मणस्पते वि सख्यानि सृजामह इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राकृत्य ध्रुवामाप्याय्य षड्गृहीयाणि जुहोति धाता रातिः सवितेदं जुषन्तामिति[1] त्रीणि यजूंषि यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथ स्रुचि चतुर्गृहीतं गृहीत्वायुर्दा दग्नौ जुहोत्यायुर्दा अग्ने हविषो जुषाण इत्यथैतस्मिन्काले चात्वाले यजमानः कृष्णविषाणां प्रास्यतीन्द्रस्य योनिरसि वज्रस्य त्वा योनौ सादयामीति वा तूष्णीं वाथ प्रतिप्रस्थाता पत्नीमुदानयति सा चात्वाले शङ्कुं प्रास्यति तूष्णीम्[1] ॥ १८ ॥ पञ्चमः ॥

अथैतमवभृथं[2] संसादयन्त्यग्रेणाग्नीध्रमुत्क्राय्यां[3] वा चर्मणि वा[1] पत्नीशालादाहवनीयं वारुणमुपस्तीर्णाभिघारितमाज्यस्थालीं समुद्रां स्रुवं बर्हिः प्रतिवमनीये वासमी औदुम्बरीं राजासन्दीं[1] सदस औदुम्बरीं स्थूणां मैत्रावरुणदण्डं[1] हविर्धानाभ्यां पूतभृदाधवनीयौ चमसानधिषवणं चर्माधिषवणे फलके षट् ककुभ्याणी वायव्यानि स्थालीर्द्रोणकलशं[4] दशापवित्रं स्वजीर्षमित्येतत्सह कृष्णाजिनेन यत्किञ्चित्सोमलिप्तं भवत्यथ वै भवति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्तीत्येतत्समादाय

---

१ अपत्य॰ all except PBE and Bh.; K..: अपनि मर्व।

२ चवैनदव॰ JT.

३ Thus (or उत्क्राय्यां) BP Bh. Ke; उत्क्रायां F उत्क्रायां JF; उत्कांयां H.

४ स्थालीं HJTF; स्थाली BP; स्थालीर् Ke.

प्रस्तोतारमाह प्रस्तोतः साम[1] गायेति । साम्ना प्रस्तोताग्नीवेति त्रिर्निधनमुपैति । पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणमथान्तरेण चात्वालोत्करावुदङुपनिष्क्रामन्नुरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चिदिति । विषुवति द्वितीयं निधनमुपयन्त्यपपराख्याय वाचयति शतं ते राजन्भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो निरृतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मदित्युदङ्क्रान्ते तृतीयं निधनमुपयन्त्यथापामन्तमभितिष्ठन्त्यभिष्ठितो वरुणस्य पाश इत्यथाप्सु बर्हिः प्रास्यत्यग्नेरनीकमप आविवेश । अपां नपात्प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्न इत्यथैनत्स्रुवाहुत्याभिजुहोति प्रति ते जिह्वा घृतमुच्चरण्येत्स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषश्चतुरः प्रयाजान्यजत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह ॥ १९ ॥

वरुणायानुब्रूहीति । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । [2]प्रत्यनक्त्यत्याक्रम्याश्राव्याह[3] वरुणं यजेति । वषट्कृते जुहोत्यथोपस्तीर्य सर्वत्र एव वारुणमवद्यदाहाग्नीवरुणाभ्याꣳ स्विष्टकृद्भ्यामनुब्रूहीति । द्विरभिघारयत्याश्राव्याहाग्नीवरुणौ

---

१ Thus HTP Bh. Keś; सामानि BJ Mantramālā.

२ F ins. च ।

३ Instead of अत्याक्रम्य (thus TP) B has आक्रम्य; F om. the words अत्याक्रम्य ... द्विरभिघारयति ।

स्विष्टकृतौ यजेति[1] वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषौ द्वावनूयाजौ यजत्यथाप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरित्यथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुताप इत्यथैनापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः। सूक्तवाके नमोवाके विधेम स्वाहेत्यथैनमवभृथं संप्रकिरन्ति यत्किंचित्सोमलिप्तं भवत्यवभृथ निचंकुण निचेरुरसि निचंकुणाव देवैर्देवकृतमेनो ऽयाड्व मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहीत्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति[1] तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्याथैतदृजीषं प्लावयन्ति[2] सह कृष्णाजिनेन देवीराप एष वो गर्भस्तं वः सुप्रीतं सुभृतमकर्म देवेषु नः सुकृतो ब्रूतादिति[1] विन्दूनुपैव स्पृशति[1] न भक्षयत्यथानपमज्जन्तावन्योन्यस्य पृष्ठे धावयतो[2] विस्रस्य मेखले प्रतिवमनीये वाससी परिधायोन्नेतारमाहोन्नेतरुन्नो नयेति[1] तिसृभिरुद्वतीभिरुद्द्रायन्त्युद्वयं तमसस्पर्युद् त्यं चित्रमित्यथापामन्तं प्रतियौति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश इत्यथाप्रतीक्षमायन्ति[1] वरुणस्यान्तर्हित्यै[1] प्रपणे समिधः कुर्वत एधो

१ °हंति HBF Ke.; °यति TP.

२ Thus HJFP Bh.; धावयित्वा BT Ke.

ऽग्नेधिषीमहीत्यैत्याहवनीये[1] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्याहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेति । व्यवच्छिन्दन्ति परिश्रयणानि । विवर्तयन्ति[2] हविर्धाने दक्षिणेन दक्षिणमुत्तरेणोत्तरम् । ॥ २० ॥

यावदेवाध्वर्युस्तिष्ठति तावदेव प्रतिप्रस्थाता प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपत्येष एव वेद एतन्मेक्षणमेतद्बर्हिरथैतां चरुस्थालीꣳ सक्षामकाषामुत्खिद्य[3] निर्णिज्य तयोदयनीयꣳ श्रपयति । तस्मिꣳस्तथैव श्रप्यमाणे जघनेन गार्हपत्यमौपसदायां वेद्याꣳ स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं अपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति ।[4] समानं कर्म यथा प्रायणीयस्यै तावदेव नाना । पथ्यामनु च स्वस्तिं प्रथमां यजति तामिहोपोत्तमां यजति । नो तु दिग्भ्यश्चवन्ते[5] । ऽथ पुरस्तात्स्विष्टकृतः स्रुवाहुतिमुपजुहोति यास्ते विश्वाः समिधः सन्त्यग्न इत्युपस्तरणाभिघारणाभ्यामेवैतद्धुवाज्यं विच्छिꣳषन्ति[6] । समि-

१ Some of the MSS. एता आह०, cp. p. 126, l. 11, p. 140, l. 15.

२ Thus PJ Bh.; ववर्तयंति TF Keś; निवर्तयंति BH.

३ उत्क्षिप्य most of the MSS.

४ After हरति HFJ ins. यदाग्नीध्रस्त्रिर्हरति ।

५ Uncertain. नेतुदिग्भ्यश्चवते B; नेतुर्दग्भ्यचवते T; नेतुर्दिग्भ्यश्चवंते F; नेमिचदिग्भ्यश्चवते J; नेतुदिग्भ्यश्चवंते H; नोमिचदिग्भ्यश्चवते P.

६ Uncertain; विछिंपति BF; संभिंवंति J; भुवाक्षिविच (?) T; विछिंपंति H; विछिꣳपंति P; व्यवयवन्ति the Comm.

स्रुवमुह हैके जुह्वति । संस्थित उदयनीयः संतिष्ठते । ऽथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथ पृषदाज्यवन्त्याज्यानि गृहीत्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै प्रचिद्य वपया चरित्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते । नखानि निकृन्तते । सर्वसंस्थां[1] पशोः कुर्वन्त्यथ यदि वशां न लभते मैत्रावरुणीमामिक्षां गार्हपत्ये श्रपयित्वा तयाहवनीये प्रचरति । आज्यभागप्रतिपत्त्केडान्ता[2] संतिष्ठते ॥ २१ ॥

[3]अथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्याग्नेयमष्टाकपालमुदवसानीयामिष्टिं निर्वपति । श्रपयित्वासादयति । तस्याः पञ्चदश सामिधेन्यः । पञ्च प्रयाजाः[4] । वार्त्रघ्नावाज्यभागावथ हविषो ऽग्ने तमद्याश्वं न इति । त्रिष्टुभौ संयाज्ये । अन्वाहार्यमासाद्यानड्वाहं ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्य[5] पूर्वाणि दैविकाहवींषि निर्वपत्यनुमत्यै चरुं राकायै चरुं धात्रे

---

१ संस्थां TT. सर्वसंस्था the other MSS. संस्थाः H.

२ Thus only J; °प्रतिपत्क° B. प्रचरत्याज्यभागाभ्यां प्रत्तीडान्ता F; T altogether corrupt; प्रचरत्याज्यभागप्रभृतीडान्ता H.

३ This Khaṇḍa is given according to PBJT, HF differ materially; these MSS. treat firstly of the devikāhavimsi, then of the udavasānīyā iṣṭi.

४ प्रयाजानिष्ट्वा TJP.

५ Instead of थारण्योर … विहृत्य P has: यथैतदाग्नीषेण यद्यागृहीतापः प्रणीय ।

